मान्यो लोकेषु नः कृष्णो नीपाग्रादुग्रपन्नगे ।
सलिले पतितो मोहादिति गोपा विचुक्रुशुः ॥ ८७ ॥

**मान्यो लोकेष्विति** । लोकेषु माननीयो नः कृष्णः नीपवृक्षस्याग्रप्रदेशात् उग्रेण भयंकरेण पन्नगेन कालियाख्यसर्पेण युक्ते सलिले मोहात् पतितः । इति गोपाः विचुक्रुशुः । ८७

धन्यः शरैरथोद्वेलविषदिग्धजलोक्षितः ।
वनान्तोऽस्याः प्रजज्वाल समन्तात्पतिते हरौ ॥ ८८ ॥

**धन्यः शरैरिति** । अथ शरैः सितपुष्पगुच्छैर्जलप्रान्तप्ररोहिभिः स्थूलदर्भाकृतिपत्रैस्तृणविशेषैः धन्यः धनवान्, शरप्रचुर इत्यर्थः । अस्याः यमुनायाः वनान्तः तत्तीरवर्तिवनमध्यप्रदेशः हरौ श्रीकृष्णे पतिते सति समन्तात् उद्वेलेन वेलामतिक्रम्य प्रवृद्धेन विषदिग्धेन जलेनोक्षितः सिक्तः सन् प्रजज्वाल विषवेगजेन वह्निना दग्धोऽभूत् । ८८

सुखि सन्नित्यमस्माकं चित्तमद्य तु वेपते ।
इति चिन्ताकुलो नन्दः शुश्राव रुदतां रुतम् ॥ ८९ ॥

**सुखि सन्नित्यमिति** । नित्यं सुखि सत् अस्माकं चित्तमद्य वेपते । तत्र किं निदानं स्यादिति चिन्तया व्याकुलो नन्दः रुदतां गोपानां रुतं शब्दं शुश्राव । ८९

लाभो धान्यस्य योऽस्माकं स सर्वो विप्रसात्कृतः ।
इति नन्दोऽभ्यगाद्गोपैः कालिन्दीकूलमाकुलः ॥ ९० ॥

**लाभो धान्यस्येति** । अस्माकं यो धान्यस्य लाभः स सर्वोऽपि; समग्रमपि लब्धं धान्यमित्यर्थः । विप्रसात्कृतः ब्राह्मणाधीनः कृतः, ब्राह्मणेभ्यो दत्तो भविष्यतीति निश्चित्य नन्दः आकुलः सन् गोपैः सह कालिन्द्या यमुनायाः कूलं तीरमभ्यगात् । ९०

अङ्कूरं निरयस्यापि न परं लौकिकापदाम् ।
शोषयिष्यति योऽस्माकं तमृते जीवनं वृथा ॥ ९१ ॥

**अङ्कूरं निरयस्येति** । यः श्रीकृष्णः लौकिकापदाम् ऐहलौकिकानामापदाम् अङ्कूरं प्रथमप्ररोहं परं शोषयिष्यतीति न, किं तु निरयस्य पारलौकिकस्य नरकस्यापि अङ्कूरं शोषयिष्यति; भगवति विन्यस्तचित्तानां नरकप्राप्त्यभावादिति भावः । तं श्रीकृष्णम् ऋते विहाय अस्माकं जीवनं वृथा व्यर्थं भवति । ९१

धावेद्वैद्योऽत्र मित्रं वा नैवाद्य त्रातुमापदः ।
भक्ष्या भवाम नागस्य भगवत्यर्पिताशयाः ॥ ९२ ॥

**धावेद्वैद्य इति** । अद्यास्मानापदः त्रातुं वैद्यो मित्रं वा अत्र न धावेत् । भगवति श्रीकृष्णे अर्पिताशयाः विन्यस्तचित्ताः वयं नागस्य कालियस्य भक्ष्याः भवाम । ९२

गत्वा सुराष्ट्रं तद्विष्णोः सद्यो मोदाम मा चिरम् ।
इति घोषे स्थिते रामस्तमस्मारयदीश्वरम् ॥ ९३ ॥

**गत्वा सुराष्ट्रमिति** । नागेन भक्षितानां स्वेषां परमपुरुषार्थप्राप्तिमाह । सद्यः अविलम्बेन विष्णोः तत् परमपुरुषार्थत्वेन श्रुत्यादिषु प्रसिद्धं सुराष्ट्रं श्रीवैकुण्ठाख्यं नगरं गत्वा मा चिरम् अचिरादेव मोदाम । इति घोषे गोपानां कोलाहले जाते रामो बलरामः तं श्रीकृष्णम् ईश्वरं सर्वलोकेश्वरं दुष्टनिग्रहाय मर्त्यलोके अवतीर्णम् अस्मारयत् । ९३

गमनकालममुष्य निवेदयन्निजगृहादधिवारिधि माधवः ।
शिरसि निष्ठुरपादविघट्टनैर्गलितदर्पमथाकृत दर्पकम् ॥ ९४ ॥

**गमनकालमिति** । अथ माधवः श्रीकृष्णः अमुष्य कालियस्य निजगृहात् यमुनाह्रदात् अधिवारिधि वारिधिं प्रति गमनकालं निवेदयन् शिरसि कालियफणामण्डले निष्ठुरपादविघट्टनैः कठोरैः पादताडनैः दर्पकं दृप्तं तं कालियं गलितदर्पम् अकृत । ९४

दयावान् रोगिणमसुं भर्तारं त्वं प्रयच्छ नः ।
इति स्वीकृत्य तं पत्न्यो ययुरब्धिं विहायसा ॥ ९५ ॥

**दयावान् रोगिणमिति** । हे कृष्ण दयावान् त्वं रोगिणं भवत्पादताडनेन संजातव्यथम् अमुं भर्तारं नः अस्मभ्यं प्रयच्छ । इति संप्रार्थ्य पत्न्यः कालियपत्न्यः तं भर्तारं स्वीकृत्य लब्ध्वा विहायसा वियन्मार्गेण अब्धिं ययुः । ९५

होमस्थानं वनमभूत्तद्विशेषेण यज्वनाम् ।
नीपश्च पापशमनः सोऽप्यसौ यमुनाह्रदः ॥ ९६ ॥

**होमस्थानं वनमिति** । तत् वनं यमुनातीरवनं कालियनिरासानन्तरं विशेषेण यज्वनां यजनशीलानां होमस्थानमभूत् । भगवत्पदकमलविन्यासधन्यम्, अत एव परमपावनं चैतद्वनमिति मत्वा सर्वेऽपि यज्वानस्तत्रागत्य यज्ञमकुर्वन्नित्यर्थः । एवं सः नीपः कदम्बवृक्षोऽपि पापशमनो बभूव । तथा असौ यमुनाह्रदोऽपि पापशमनो बभूव । ९६

श्रीमान् पुत्रो वारिपूरमिव नन्दस्य यामुनम् ।
सुशीतमतनोद्बाष्पं स्वाङ्गसङ्गाद् व्रजौकसाम् ॥ ९७ ॥

**श्रीमान् पुत्र इति** । नन्दस्य श्रीमान् पुत्रः श्रीकृष्णः यामुनं यमुनासंबन्धिनं वारिपूरमिव जलप्रवाहमिव व्रजौकसां गोपानां बाष्पं स्वाङ्गसङ्गात् सुशीतम् अतनोत् । ९७

तन्मम नामावन्यां कृत्यमिति प्राप्य परिवृतो गोपैः ।
रामो रासभदैत्यांस्तालवने धेनुकादिकानवधीत् ॥ ९८ ॥

**तन्मम नामेति** । रामो बलरामः अवन्यां भुवि मम तन्नाम कृत्यमिति मत्वा भुवं प्राप्य गोपैः परिवृतः सन् तालवने तालवृक्षाणामरण्ये स्थितान् धेनुकादीन् रासभदैत्यान् रासभरूपिणोऽसुरान् अवधीत् । ९८

दानानां क्रमकर्त्रैक्यनियमेच्छा कदर्यता ।

इति तस्यानुगान् कांश्चिद्यमायादात्स्वयं हरिः ॥ ९९ ॥

दानानां क्रमेत्यादि । हरिः श्रीकृष्णः दानानां विषये क्रमकर्त्रैक्यनियमेच्छा पूर्वमिदं देयं पश्चादिदमिति क्रमस्य एकेनैव कर्त्रा सर्वं देयं नान्येन तत्संबन्धिनापीति कर्त्रैक्यनियमस्य चेच्छा कदर्यता कदर्यस्य लुब्धस्य कर्म भवति । लुब्ध एवैतद्व्याजेन विलम्बं कुर्यादित्यर्थः । इति मत्वा तस्य धेनुकस्यानुगान् कांश्चिद्दैत्यान् यमाय स्वयमेव बलराममप्रतीक्ष्यैवादात् । तदनुगान् स्वयं जघानेत्यर्थः । ९९

क्षेत्रवानस्तु देशेन शश्वन्मुनिजनोऽमुना ।

इति तौ जग्मतुर्गोपैः स्तूयमानौ निजं व्रजम् ॥ १०० ।

क्षेत्रवानस्त्विवति । मुनिजनः अमुना देशेन यमुनातीरप्रदेशेन शश्वत् निरन्तरं क्षेत्रवान् अस्तु । अमुं देशं स्वावासक्षेत्रं करोत्वित्यर्थः । इति मत्वा तौ रामकृष्णौ गोपैः स्तूयमानौ निजं व्रजं जग्मतुः । १००

शंभुर्जयति दैतेयान् संभावयति च क्वचित् ।

विष्णुरभ्यर्थितो हन्याद्युवां स्वयमहो हथः ॥ १०१ ॥

शंभुर्जयतीति । स्तुतिप्रकारमेवाह । शंभुः दैतेयान् अन्धकादीनसुरान् क्वचिज्जयति । क्वचित्तु बाणादीनसुरान् सुहृद्भूत्वा संभावयति च । न तु सर्वदा दैतेयान् हन्ति । विष्णुः अभ्यर्थितः सन् दैतेयान् मधुकैटभादीन् हन्यात्, न त्वनभ्यर्थितः । युवां तु स्वयमेवानभ्यर्थितावेव तान् हथः । अहो इत्याश्चर्ये । १०१

रत्नाङ्गनार्थदायादि विवादालम्बनं विना ।

वध्यानवध्यानपरैरपध्यानपरान् भुवः ॥ १०२ ॥

रत्नाङ्गनार्थेत्यादि । विवादस्य परस्परवैरस्यालम्बनभूतं रत्नाङ्गनार्थदायादि विना वध्यान्, तथा अपरैः अन्यैः अवध्यान्, तथा भुवः अपध्यानपरान् पीडनचिन्तापरान्; असुरानित्यग्रिमश्लोकस्थेनान्वयः । १०२

**रक्ष्या सा पार्थिवी नित्यं जनतेति व्रतादिव ।**
**निघ्नतोरसुरान्नित्यमद्भुतेयं प्रगल्भता ॥ १०३ ॥**

**रक्ष्या सा पार्थिवीति** । पार्थिवी पृथिव्यां जाता सा जनता जनसमूहः नित्यं रक्ष्या इति व्रतादिव नित्यमसुरान् निघ्नतोः युवयोरियं प्रगल्भता प्रौढिमा अद्भुता आश्चर्यकरी । देवतान्तरेषु ईदृशी प्रौढिर्न दृश्येति भावः । १०३

**सापत्यनिन्दा नन्देन क्रियते युवयोः कृते ।**
**अपायशङ्कयेत्यासन् सखायो मुखराः शतम् ॥ १०४ ॥**

**सापत्यनिन्देति** । नन्देन नन्दगोपेन युवयोः कृते विषये अपायशङ्कया 'कदा कीदृशोऽपाय एतयोः संभवेत्' इति शङ्कया सापत्यनिन्दा सापत्यानाम् अपत्यवतां जनानां निन्दा गर्हा 'किमर्थं लोके जनाः शङ्कास्पदैरपत्यैर्युज्यन्ते । यदि निरपत्या भवेयुः तदा निःशङ्काः सुखिनो भवेयुः' इति निन्दा क्रियते । इति अनयोः शतं सखायः मुखराः शब्दायमाना आसन् । १०४

**जनो मान्यं हि भाण्डीरवटं प्राप्य चकार सः ।**
**द्वन्द्वक्रीडामथ प्राप प्रलम्बो गोपरूपधृत् ॥ १०५ ॥**

**जनो मान्यं हीति** । स जनो गोपजनः मान्यं माननीयं भाण्डीरवटं भाण्डीराख्यं वनस्थं वटवृक्षं प्राप्य द्वन्द्वक्रीडां द्वाभ्यां द्वाभ्यां सह मिलित्वा करणीयां क्रीडां चकार । अथ प्रलम्बो नामासुरः गोपरूपधृत् गोपरूपं धृत्वा तं देशं प्राप । १०५

**स वाजिराजवत्प्राह जितस्त्वन्यं वहत्विति ।**
**स्वयं जितोऽवहद्रामं क्षणाद् व्योम जगाम च ॥ १०६ ॥**

**स वाजिराजवदिति** । सः प्रलम्बः जितः क्रीडायां यः पराजितः सः, अन्यं तु जितेतरं वाजिराजवत् अश्वश्रेष्ठवत् वहतु स्कन्धेन दधातु इति प्रोवाच

प्राह। अनन्तरं स्वयं जितः सन् रामं बलरामम् अवहत्। क्षणादेव व्योम आकाशं जगाम च। बलरामं स्कन्धे धृत्वोत्पत्य आकाशे जगामेत्यर्थः। १०६

आकारो युद्धमेतेन काङ्क्षतो ववृधे द्विषः।
मुष्ट्या मुसलिनो दैत्यो गतासुरपतच्च सः॥ १०७॥

**आकारो युद्धमिति**। एतेन बलरामेण सह युद्धं काङ्क्षतः द्विषः प्रलम्बस्याकारः देहः ववृधे। गोपरूपं विहाय महदासुरं रूपमुवाहेत्यर्थः। अथ मुसलिनः मुसलायुधवतो बलरामस्य मुष्ट्या सः दैत्यः प्रलम्बः गतासुः विगलितप्राणः भूमौ अपतच्च। १०७

दास्यामः श्राद्धमस्मै नो बान्धवायेति वल्लवाः।
सोत्प्रासं गोशकृत्पिण्डांस्तन्मुखे किल चिक्षिपुः॥ १०८॥

**दास्यामः श्राद्धमिति**। वल्लवाः गोपाः नोऽस्माकं बान्धवाय गोपरूपवहनेन बन्धुभूतायास्मै श्राद्धं दास्यामः इत्युक्त्वा सोत्प्रासं सपरिहासं गवां शकृत्पिण्डान् तन्मुखे तदास्ये चिक्षिपुः किल। १०८

कार्या हानिर्नार्याः शुल्कार्थे सप्तवृषवराणां वा।
इति कुम्भकसंदेशाद्गोपाः प्रापुर्द्रुतं व्रजं तस्य॥ १०९॥

**कार्या हानिर्नार्या इति**। नार्याः हानिः कार्या। अथवा शुल्कार्थे कल्पितानां सप्तसंख्याकानां वृषवराणां वा हानिः कार्या। इति कुम्भकस्य संदेशात् गोपाः द्रुतं तस्य व्रजं गोष्ठं प्रापुः। १०९

दम्भा नरा नष्टभया गोपालेषु वृषासुरैः।
बहवो निहतास्तेऽपि वृषाः कृष्णेन मुष्टिभिः॥ ११०॥

**दम्भा नराः नष्टभया इति**। गोपालेषु मध्ये दाम्भिकाः नष्टभयाश्च बहवो वृषरूपैरसुरैः निहताः। ते वृषा अपि कृष्णेन मुष्टिभिर्निहताः। ११०

विकलानां कार्याप्तिर्नैव बलेनेति वल्लवा जग्मुः ।
हरिरपि नीलां कन्यामादायागात् स्वयंवरे लब्धाम् ॥ १११ ॥

**विकलानां कार्याप्तिरिति।** विकलानामल्पानां बलेन कार्यस्याभीष्टस्य प्राप्तिर्नैव भवति। अल्पाः केवलं बलेनैव कार्यं साधयितुं न प्रभवन्तीत्यर्थः। इत्युक्त्वा वल्लवा गोपाः जग्मुः; प्रतिनिवृत्य स्वं देशं प्रापुः। हरिरपि श्रीकृष्णोऽपि स्वयंवरे लब्धां नीलां नाम कन्यामादायागात्। १११

हरणं पाद्यस्य हरिः शक्रमखार्थस्य कारयन् गोपैः ।
तान् गिरिपूजानिरतांस्तताम तामेव गुरुतरामुक्त्वा ॥ ११२ ॥

**हरणं पाद्यस्येति।** हरिः श्रीकृष्णः शक्रमखार्थस्य महेन्द्रपूजार्थं परिकल्पितस्य पाद्यस्य पूजाद्रव्यस्य हरणं गोपैः कारयन्, तामेव गिरिपूजां गुरुतरामिन्द्रपूजापेक्षया श्लाघनीयामुक्त्वा तान् गोपान् गिरिपूजानिरतान् ततान। ११२

तुलासंप्रत्ययप्रायं स्वोक्तप्रत्ययमावहन् ।
गिरिमूर्ध्नि स भुञ्जानं महद्भूतमदर्शयत् ॥ ११३ ॥

**तुलासंप्रत्ययेत्यादि।** तुलया धारणे सति यो दृढः संप्रत्ययो विश्वासो भवति तत्सदृशं स्वोक्ते विषये जनानां प्रत्ययं विश्वासम् आवहन् सः श्रीकृष्णः गिरिमूर्ध्नि भुञ्जानं गोपैर्दत्तं बलिं भक्षयत् महत् भूतम् अदर्शयत्। ११३

धिगन्धोऽयं व्रजः पश्यत्यस्मन्निन्दाफलं न यः ।
इत्यमुं धर्षयामास वर्षेणामर्षितो वृषा ॥ ११४ ॥

**धिगन्ध इति।** अयं व्रजः गोकुलस्थो जनः सर्वोऽपि अन्धः दृष्टिशून्यः; युक्तायुक्तविवेकरहित इति यावत्। धिक्; तमिति शेषः। यो व्रजस्थो जनः अस्मन्निन्दाफलं महेन्द्रस्य मम निन्दायां यत् फलं जायेत तत् न पश्यति। इति मत्वा अमर्षितः संजातक्रोधो वृषा इन्द्रः वर्षेण वृष्ट्या अमुं व्रजं धर्षयामास पीडयामास। ११४

कविः पुत्रोऽथ नन्दस्य सप्ताहं वामबाहुना ।
वहन् महीधरं स्वेषां वर्षार्तिमहरत्प्रभुः ॥ ११५ ॥

कविः पुत्र इति । अथ कविः सर्वज्ञः प्रभुः नन्दस्य पुत्रः श्रीकृष्णः सप्ताहं वामेन बाहुना महीधरं गिरिं वहन् स्वेषां स्वकीयानां गोपालानां गवां च वर्षार्तिं वृष्टिजन्यां पीडाम् अहरत् अपनोदयामास । ११५

तद्वाङ्गनेयं वार्यं वा भवानत्रावधार्यते ।
सर्वात्मा तु स्मराम्येतदद्यापेतमदज्वरः ॥ ११६ ॥

तद्वाङ्गनेयमिति । पञ्चभिः पद्यैर्महेन्द्रकृतां श्रीकृष्णस्तुतिं वर्णयति । सर्वात्मा, अन्तः प्रविष्टः शास्ता जनानां सर्वेषामन्तरात्मा सन् भवान् अत्र लोके तत्तद्वस्तुरूपो वा पुरो दृश्यमानाङ्गनाजनरूपो वा दृश्यमानतत्तत्पुरुषनिकररूपो वावधार्यते निश्चीयते । सर्वेषामात्मभूतः सन् तत्तद्रूपेण त्वं प्रकाशस इत्यर्थः । अद्य भवत्कृतपर्वतोद्धरणदर्शनसमये अपेतमदज्वरः विगलितमदजनितविकारः सन् एतत् तव माहात्म्यं स्मरामि । ११६

जीर्णो मे कायमाश्रित्य रजसा जनितो मदः ।
संगमात्सत्त्वरूपेण त्वयाद्य बलशालिना ॥ ११७ ॥

जीर्णो मे कायमिति । मे कायं देहमाश्रित्य स्थितेन रजोगुणेन जनितो मदः सत्त्वरूपेण रजस्तमोऽसंवलितशुद्धसत्त्वरूपेण बलशालिना च त्वया सह संगमाद्धेतोः अद्य जीर्णः नष्टः । ११७

देयो हरस्य भागोऽभूद्दक्षेणापि पुरा क्रतौ ।
त्वया तु मे हतो दर्पस्तस्य तेन हृतं शिरः ॥ ११८ ॥

देयो हरस्येति । पुरा क्रतौ यागे दक्षेण दक्षनाम्ना यजमानेनापि हरस्य भागो हविर्भागो देयः अभूत् । तेन हरेण तस्य दक्षस्य शिरः हृतम् । त्वया तु मे दर्पः हतः । ११८

अशनपरः शिशुकः स्वां जननीमिव पीडयत्ययं गोपान् ।
इति नूनं चक्रस्य क्रोधाच्चक्रे भवान्न लक्षं माम् ॥ ११९ ॥

**अशनपर** इति । अशनपरः अशनार्थी शिशुकः स्वां निजां जननीमिव, अयं महेन्द्रः गोपान् पीडयति ; यागे देयं हविरुद्दिश्येति शेषः । इति मत्वा भवान् दयानिधिस्त्वं मां चक्रस्य भवदीयसुदर्शनस्य क्रोधात् लक्षं लक्ष्यं न चक्रे । इत्येतत् नूनं निश्चितमित्यर्थः । ११९

ताललेखोऽत्र को बाह्वोरथवा बालवैष्णवान् ।
पीडयेन्मामृते हन्त मया स्वात्मापि विस्मृतः ॥ १२० ॥

**ताललेखोऽत्रेति** । अथवा अत्र गोपालानां पीडनविषये मे बाह्वोः ताल-लेखः कृतः तालपत्रे विलिख्य निन्दारूपो लेखः कृतः । मामृते मामेकं विना अन्यः कः बालान् वैष्णवान् विष्णुभक्तान् पीडयेत्, न कोऽपीत्यर्थः । मया स्वात्मापि स्वस्वरूपमपि विस्मृतः, यतोऽहं त्वदाश्रितो भूत्वा त्वदीयानेव भक्तान् अपीडयमिति भावः । १२०

संगतो नागराजेन मयि कक्षीकुरु क्षमाम् ।
इति नत्वाथ गोविन्दमभिषिच्य ययौ हरिः ॥ १२१ ॥

**संगतो नागराजेनेति** । अथ हरिः इन्द्रः **नागराजेन** अनन्तेन तदंशा-वतारभूतेन बलभद्रेणेत्यर्थः ; **संगतः** युक्तः सन् मयि कृतापराधे त्वां शरणं गते च मयि, **क्षमां** कक्षीकुरु स्वीकुरुष्व, इति वदन् नत्वा **गोविन्दमभिषिच्य** गोविन्दपदे अभिषेकं कृत्वा ययौ गतः, दिवमिति शेषः । गवां संरक्षणात् गोविन्द इति दिव्येन नाम्ना श्रीकृष्णमाहूयेन्द्रेण तस्याभिषेकः कृत इति श्रीभागवतादौ प्रसिद्धम् । १२१

विशुद्धयोगिनामात्मा यथैव क्लेशसंक्षये ।
घने लीने तथाकाशः स्वच्छायामभजत्पराम् ॥ १२२ ॥

**विशुद्धयोगिनामिति** । **क्लेशसंक्षये** सांसारिकजन्मजरामरणादिदु:खहेतुभूतकर्मरूपक्लेशानां संक्षये नाशे सति, संसारान्मोक्ष इत्यर्थः । यथा **विशुद्धयोगिनाम्**; विशुद्धे क्लेशास्पृष्टे परमात्मनि योगशीलानां महताम् **आत्मा स्वच्छायां** स्वाभाविकीं ज्ञानानन्दापहतपाप्मत्वादिगुणशोभां भजेत "परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते" इति श्रुतेः, तथैव **आकाशः घने मेघे लीने** अपगते सति **परां स्वच्छायां** स्वस्य स्वाभाविकीं नैर्मल्यगुणशोभाम् अभजत् । १२२

तारांकं नभसो रूपं तारापतिसमन्वितम् ।
आत्मरूपमिवानेकक्रत्वपूर्वयुतं बभौ ॥ १२३ ॥

**ताराङ्कं नभस इति** । **ताराङ्कम**; नक्षत्रचिह्नितम् । **तारापतिसमन्वितम्**; चन्द्रसहितं च **नभसः रूपम्**; आकाशस्य स्वरूपम् । **अनेकक्रत्वपूर्वयुतम्**; अनेकैः बहुभिः नैकविधैः क्रतुजन्यैः यज्ञानुष्ठानजन्यैः अपूर्वैः अपूर्वाख्यधर्मैः युतम् **आत्मरूपमिव** यज्वात्मस्वरूपमिव बभौ । विश्वजिदादिभिर्यज्ञैरनुष्ठितैः आत्मनि अपूर्वाख्याः धर्मा उत्पद्यन्ते । त एव यज्वनां तत्तत्फलानि संपादयन्ति; न तु यज्ञा एव, तेषां क्रियारूपाणां क्षयिष्णुत्वेन चिरकालानन्तरभाविफलजनकत्वासंभवादिति कर्मठानां मीमांसकानां राद्धान्तः । १२३

प्रियार्थं कविना कृष्णेनागायि मधुराक्षरम् ।
गुम्भस्तम्भहरस्त्रीणां समालोक्य शरन्निशाम् ॥ १२४ ॥

**प्रियार्थं कविनेति** । **कविना** मनीषिणा सर्वज्ञेन श्रीकृष्णेन **शरन्निशां** सुधाकरकरधवलितां कामोद्दीपनीं निशां **समालोक्य गुम्भस्तम्भहरस्त्रीणां** गुम्भनार्थं नवनीतस्यैकीकरणार्थं, मन्थनार्थमिति यावत्, यः स्तम्भः मन्थदण्डः, तद्धारिणीनां स्त्रीणां, गोपस्त्रीणामित्यर्थः । **प्रीत्यर्थं** प्रीतिमुत्पादयितुं मधुराक्षरं यथा तथा अगायि गानं कृतम् । १२४

पापोऽयं निशि नित्यशो निजगृहे शेते क्वचिद्वञ्चयन्
यो मां मारहतामसौ विधिवशादास्ते वनेऽस्यां निशि ।

यास्यद्येति मुहुः प्रणम्य शिरसा विष्णुं द्रुतायां हरे-
गीतौ तत्प्रतिशब्दवद्युवतयो यान्ति स्म तस्यान्तिकम् ॥ १२५ ॥

पापोऽयं निशीति । योऽयं पापः मारहतां मदनपीडितां मां वञ्चयन् निशि नित्यशः सदा क्वचित् निजगृहे शेते असौ कृष्णः विधिवशात् दैवाधीनतया अस्यां निशि वने आस्ते । तस्मात् अहमद्य यामि तत्समीपं गच्छामि । इति वदन्त्यः युवतयः गोपतरुण्यः विष्णुं भगवन्तं श्रियः पतिं स्वाराध्यदैवतं मुहुः पुनः पुनः शिरसा प्रणम्य; शिरसेति जान्वोरप्युपलक्षणम् । जानुभ्यां शिरसा च प्रणामः स्त्रीणां विहितः । हरेः श्रीकृष्णस्य द्रुतायां गीतौ तत्प्रतिशब्दवत् तस्या गीतेः प्रतिशब्दवत् । प्रतिध्वनयः यथा प्रतिनिवृत्य ध्वन्युत्पत्तिप्रदेशमागच्छन्ति, तद्वत् । तस्य श्रीकृष्णस्यान्तिकं समीपं यान्ति स्म ययुः । १२५

धन्यो मान्ये शेषभावमगमद्गोपिकाजने ।
प्रत्येकपरिक्लृप्ताभिरच्युतः स्वीयमूर्तिभिः ॥ १२६ ॥

धन्यो मान्य इति । धन्यः; विश्वं जगत् स्वीयधनत्वेन लब्धा, सर्वशेष्यपीत्यर्थः । अच्युतः प्रत्येकपरिक्लृप्ताभिः एकैकस्या गोपिकाया एकैकः कृष्ण इति रीत्या परिकल्पिताभिः स्वीयमूर्तिभिः मान्ये गोपिकाजने शेषभावं शेषवृत्तिमगमत् । स्वयं सर्वशेष्यपि आश्रितवत्सलतया गोपीनां विषये शेषवृत्तिमलभतेत्यर्थः । १२६

भोगार्धं रामाभिः कृष्णैरर्धं च कारयन्मायी ।
भोगानद्भुतरूपान् रासाख्यानन्वभूत्कृष्णः ॥ १२७ ॥

भोगार्धं रामाभिरिति । रामाभिः स्वस्मिन् रमणशीलाभिः गोपिकाभिः भोगार्धं कारयन् तथा कृष्णैः स्वयं परिगृहीतरूपैः बहुभिः कृष्णैः अर्धं च भोगस्यार्धभागं च कारयन् मायी एवमाश्चर्यचेष्टितः कृष्णः अद्भुतरूपान् रासाख्यान् रासक्रीडाख्यान् भोगान् अन्वभूत् “अङ्गनामङ्गनामन्तरे माधवो माधवं माधवं चान्तरेणाङ्गना” इत्युक्तरीत्या अनुबभूव । १२७

रामा गीयत एताः कृष्णेन क्वेति दत्तकर्णपुटाः ।
सततं तद्गतचित्ताः सख्यमिवाख्यापन्मुनिश्रेष्ठैः ॥ १२८ ॥

**रामा गीयत** इति । एताः **रामाः** गोपिकाः **कृष्णेन क गीयते** इति **दत्तकर्णपुटाः** सत्यः **सततं तद्गतचित्ताः** श्रीकृष्णनिविष्टमनस्काश्च सत्यः **मुनिश्रेष्ठैः** योगिवर्यैः समं **सख्यमकुर्वन्निव** । यथा योगिनः कृष्णेन कथं गीतायां गीयते इति तदर्थविचारपराः सदा तन्निविष्टचेतसश्च भवन्ति एवं गोपिका अप्यवर्तन्तेति भावः । १२८

अत्याहारस्तु दैत्योऽतिमहानतिबलान्वितः ।
अरिष्टो दुष्टहृदयः कृष्णं कृष्णतरोऽभ्ययात् ॥ १२९ ॥

**अत्याहारस्त्विति** । अनन्तरमेकदा **अत्याहारः अतिमहद्रूपः अतिबलान्वितः दुष्टहृदयः** अतीव **कालवर्णश्च अरिष्टो** नामासुरः **कृष्णमभ्ययात्** कृष्णमभिद्रुत्याजगाम । १२९

अङ्गारकोऽसौ धिषणेन युक्तः साक्षादिवोद्वेजितजीवलोकः ।
इत्येष रोषादृषभं मुरारिर्ग्रीवामुदग्रां वलयन्ममर्द ॥ १३० ॥

**अङ्गारकोऽसाविति** । **असौ** अरिष्टः **धिषणेन** गुरुणा **युक्तः** संयुक्तः **साक्षात्** अङ्गारक इव **उद्वेजितजीवलोको** भवतीति मत्वा **एष मुरारिः रोषात्** हेतोः **ऋषभं** वृषभरूपधरमरिष्टम् **उदग्राम्** उन्नतां **ग्रीवाम्** अरिष्टस्य कंधरं **वलयन्** विवृत्तां कुर्वन् **ममर्द** । १३०

लोलचक्रस्थतुरगान् सप्त सप्तहयस्य सः ।
तरसा विजितान् कुर्वन्नश्वः केश्यापययौ हरिम् ॥ १३१ ॥

**लोलचक्रस्थेति** । **सप्तहयस्य** रवेः **लोलचक्रस्थतुरगान्** लोलचक्रे रथे बद्धान् तुरगान् **सप्त** सप्तसंख्याकान् **तरसा** वेगेन **विजितान्** कृत्वा ; सूर्याश्वापेक्षया

अधिकवेगेन धावन्नित्यर्थः। अश्वः अश्वरूपधरः केशी तन्नामा असुरः हरिं श्रीकृष्णमभिद्रुत्य आययौ। १३१

प्रागनिष्पदमप्येनं नरकेषु स्वकर्मभिः।
स्वःस्थमेव हरिश्चक्रे मोघयंस्तन्मनोरथम् ॥ १३२ ॥

प्रागनिष्पदमिति। स्वकर्मभिः स्वकीयैः प्राणिहिंसनरूपैः कर्मभिः प्राक् नरकेषु अनिष्पदमपि; निर्गतं पदं यस्य सः न भवतीति अनिष्पदः तम्, दृढप्रतिष्ठितमपीत्यर्थः। एनं केशिनं हरिः श्रीकृष्णः तन्मनोरथं मोघयन् व्यर्थं कुर्वन् स्वःस्थमेव स्वर्गस्थमेव चक्रे। श्रीकृष्णेन हतोऽसौ विनिर्मुक्तसकलदुरितः स्वर्गं जगामेत्यर्थः। १३२

दिव्यवान् राजेव दिवो भोगैः कंसोऽथ नारदात्।
ज्ञात्वा वार्तां धनुर्यागमारभ्याक्रूरमानयत् ॥ १३३ ॥

दिव्यवान् राजेति। अथ कंसः दिवो राजेव महेन्द्र इव भोगैः दिव्यवान् दिव्यं भोगमनुभवन्नित्यर्थः। नारदात् नारदमुखात् वार्तां श्रीकृष्णस्योदन्तं केश्यादिहननरूपं ज्ञात्वा धनुर्यागमारभ्य तदर्थम् अक्रूरमानयत्। १३३

अंशार्थिनोर्धिया विष्णोश्चिरमक्रूरकंसयोः।
योगः कृतोऽयं तेनैव सममेव प्रसेदुषा ॥ १३४ ॥

अंशार्थिनोरिति। चिरं चिरकालमारभ्य धिया विष्णोः अंशार्थिनोः विष्णोरंशभूतं श्रीकृष्णमर्थयमानयोः भक्त्या वैरेण च श्रीकृष्णं सदा ध्यायतोरित्यर्थः। अक्रूरकंसयोः अयं योगः तयोर्विषये सममेव युगपदेव प्रसेदुषा प्रसादं प्राप्तवता तेनैव श्रीकृष्णेनैव कृतः कारितः। १३४

सेनाद्याः क्रोधवान् भङ्गेनासुर्यस्तं न्ययुङ्क्त सः।
नन्दात्मजावानयेति स रथेन व्रजं ययौ ॥ १३५ ॥

**सेनायाः क्रोधवानिति ।** सेनायाः अरिष्टकेश्यादिरूपसेनायाः भङ्गेन नाशेन क्रोधवान् कुपितः असुर्यः असुरेभ्यो हितः सः कंसः तम् अक्रूरं नन्दात्मजौ रामकृष्णौ आनयेति न्ययुङ्क्त नियोजयामास । सः अक्रूरश्च रथेन व्रजं गोकुलं ययौ । १३५

**दानं भानोर्नष्टमपां न स्यादप्रत्यवायतः ।**
**हरेच्चाघं द्विजातीनां यदद्येक्षे हरेर्मुखम् ॥ १३६ ॥**

**दानं भानोरिति ।** भानोः भानुमुद्दिश्य सूर्योदयास्तमययोः कृतम् अपां दानम् अर्घ्यदानम् अप्रत्यवायतः प्रत्यवायाभावाद्धेतोः नष्टं विफलं न स्यात् । नित्यकर्मणामकरणजप्रत्यवायपरिहारफलतया सार्थक्यं शास्त्रसिद्धम् । अपिच द्विजातीनाम् अघं च हरेत् । पापनिवृत्तिश्च तत्फलमित्यर्थः । यत् यस्मात्कारणात् अद्य हरेः श्रीकृष्णस्य मुखमीक्षे अचिरादीक्षिष्ये । वर्तमानसामीप्ये वर्तमानवत्प्रयोगः । "धर्मेण पापमपनुदति" इति धर्माचरणमृदितकषायस्य हि भगवत्सेवानुशिष्टेति भावः । १३६

**भूमिस्तस्य नियन्तुः स्याद्यशः श्रीर्विजयो नयः ।**
**हरिर्यस्य वशे हन्त हतः कंसोऽद्य सानुगः ॥ १३७ ॥**

**भूमिस्तस्येति ।** भक्तपराधीनो हरिर्यस्य वशे वर्तते तस्य नियन्तुः जनाधिपस्य भूमिः, यशः, श्रीः, विजयः, नयः इति सर्वमपि स्यात् । अद्य कंसः सानुगः सपरिजनो हतः । हन्तेति हर्षे । अत्र

"यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्धरः ।
तत्र श्रीर्विजयोभूतिर्ध्रुवा नीतिर्मतिर्मम ॥"

इति संजयवचनमवधेयम् । १३७

**चक्रार्धं प्राज्ञा यस्यायूंषि ब्रह्मणां वदन्ति यतः ।**
**जगदुदभूद्यस्य जगत्तादृशमन्तर्नतोऽस्मि तमनन्तम् ॥ १३८ ॥**

**चक्रार्धं प्राज्ञा इति ।** प्राज्ञाः यस्य चक्रार्धं ब्रह्मणामायूंषि वदन्ति । यतः जगदुदभूत । तादृशमुद्भूतं जगत् यस्यान्तः वर्तते । तम् अनन्तं श्रीकृष्णं नतोऽस्मि । १३८

**ता भार्याः पापोऽयं वत्सौ नयतीति मां व्रजे गोपानाम् ।**
**क्षेप्स्यन्ति माथुराणामाशीर्भिः सुभ्रुवोऽपि नन्दिष्यन्ति ॥ १३९ ॥**

**ता भार्याः पापोऽयमिति ।** 'अयं पापः पापिष्ठः अक्रूरोऽपि क्रूरः वत्सौ रामाकृष्णौ नयति' इति व्रजे स्थिताः गोपानां ताः श्रीकृष्णप्रेमबन्धुराः भार्याः मां क्षेप्स्यन्ति निन्दिष्यन्ति । माथुराणां मधुरास्थानां नराणां सुभ्रुवः भार्याः आशीर्भिः मां नन्दिष्यन्ति । आर्यागीतिः । १३९

**दशाम्बराण्यस्य महत्त्वयोगाच्छतानि पादाक्षिशिरांसि यस्य ।**
**यश्चायमत्यन्तमणुस्तमेनं द्रक्ष्यामि गोपालशिशुं कदा नु ॥ १४० ॥**

**दशाम्बराण्यस्येति ।** यस्यास्य श्रीकृष्णस्य अम्बराणि वस्त्राणि पादाक्षिशिरांसि च दश शतानि, सहस्राणीत्यर्थः । अत्र 'सहस्रशीर्षा पुरुषः । सहस्राक्षः सहस्रपात्' इत्यादिका श्रुतिरनुसंधेया । यश्चायम् **अत्यन्तमणुः**; दुर्विज्ञेय इत्यर्थः । "अणोरणीयान् महतो महीयान्" इति श्रुतिरत्र भाव्या । **तम्**, तादृशमहिमानम् । **एनम्**; अथापि भक्तानुजिघृक्षया मांसचक्षुषामपि दृष्टिगोचरम् । गोपालशिशुं कदा नु द्रक्ष्यामि। अत्र श्रीकृष्णदर्शनाभावे स्वस्वरूपानवस्थितिपर्यवसायिनी तदापरोक्ष्याभिलाषिणी परमभक्तिदशा विवक्षिता । १४०

**गौर्नास्तिबुद्धेर्विषयोऽस्ति किंचिन्नभःप्रसूनादि च नास्तिबुद्धेः ।**
**विश्वात्मनोऽस्य द्वितयस्य कर्त्रीं मायां मयि ध्वंसय माधवाद्य ॥ १४१ ॥**

**गौर्नास्तीति ।** **अस्तिबुद्धेः**; अस्तीति प्रतीतेः । **विषयः**; विषयभूता । **गौः**; पृथिवी । इदं दृश्यप्रपञ्चस्य व्यावहारिकस्य सर्वस्याप्युपलक्षणम् । पञ्च भूतानि तद्विकारजातं च सर्वं किंचिदपि **नास्ति**; परमार्थतः सर्वाधिष्ठानभूतत्वद्भिन्नं

नास्ति। एतत् सर्वसंप्रतिपन्नदृष्टान्तमुखेन द्रढयति—**नभ इति**। **नास्तिबुद्धेर्विषयः**; नास्तीति बुद्धेर्विषयः। **नभःप्रसूनादि च**; गगनकुसुमाद्यपि वस्तुतो नास्ति। परमार्थतो ब्रह्मभिन्नत्वेनासत्त्वे पृथिव्यादिपदार्थानां गगनकुसुमादीनां तुच्छानां चाविशेष इत्यर्थः। तथापि विश्वात्मनः प्रपञ्चरूपस्यास्य **द्वितयस्य** पृथिव्यादिभ्रमस्य गगनकुसुमादिभ्रमस्य च **कर्त्री** जननीम्। **मायाम्**; अविद्याम्, तज्जनकप्रकृतिसंसृष्टिं वा। **मयि**; विद्यमानामिति शेषः। त्वां प्रपन्ने मयि विषये इति वा, "मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते" इति भगवदुक्तेः। **अद्य**; अस्मिन्नेव क्षणे; "तदैव मुष्णात्यशुभान्यशेषतः" इत्यभियुक्तोक्तेः। **ध्वंसय**; अपुनरङ्कुरं यथा तथा नाशयेति प्रार्थना। १४१

**मीनजोऽयं न मीनत्वे कूर्मत्वे नापि कूर्मजः।**
**देवकी केन पुण्येन लेभेऽस्य जननीपदम्॥ १४२॥**

**मीनजोऽयमिति**। **अयं** भगवान् श्रीकृष्णः। **मीनत्वे**; मत्स्यावतारे। **न मीनजः**; न मीन्यां जातः। तथा **कूर्मत्वे**; कूर्मावतारे। न **कूर्मजः**; न कूर्म्यां जातः। देवकीनन्दनावतारे तु देवक्या जठरे जात इति अहो देवक्या महिमातिशय इत्याह—**देवकीति**। **केन पुण्येन**; न केनापीत्यर्थः। ज्योतिष्टोमादिजन्येन शुष्ककर्मठाभिमतेन पुण्येन नैतादृशं भाग्यमवाप्यं भवति। किंतु अनन्यभक्तिरूपतपःसंपादितभगवत्प्रसादरूपेण सुकृतविशेषेणैवावाप्यम्। वेदान्तसिद्धान्ते हि भगवत्प्रसाद एव पुण्यम्। तन्निग्रह एव पापमिति निर्णयः। एवं चापूर्वाख्यस्य धर्मान्तरस्य परिकल्पनमपि वृथेति सिध्यति। १४२

**दानानि नित्यं यागान्वा तन्वद्भिरपि दुर्लभाम्।**
**कृष्णः कुर्यान्मयि प्रीतिं निमित्तानि तथा हि मे॥ १४३॥**

**दानानि नित्यमिति**। नित्यं दानानि यागान् वा कुर्वद्भिरपि पुरुषैः दुर्लभां प्रीतिं प्रसादं श्रीकृष्णः मयि कुर्यात्। तथा हि तदनुगुणानि निमित्तानि भाविशुभसूचकानि मे प्रादुर्भवन्ति। अत्र

"नाहं वेदैर्न तपसा न दानेन न चेज्यया ।
शक्य एवंविधो द्रष्टुं दृष्टवानसि मां यथा ॥
भक्त्या त्वनन्यया शक्यः अहमेवंविधोऽर्जुन ।
ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परंतप ॥"

इति श्रीगीतावचनमनुसंधेयम् । १४३

तपः श्रेयः स्यान्ममेति तप्तमेव भवान्तरे ।
अन्यथा कथमद्याहं साक्षादीक्षे हरेर्मुखम् ॥ १४४ ॥

**तपः श्रेयः स्यादिति । मम भवान्तरे ;** अतीतबहुजन्मस्वित्यर्थः ।

"जन्मान्तरसहस्रेषु तपोध्यानसमाधिभिः ।
नराणां क्षीणपापानां कृष्णे भक्तिः प्रजायते ॥"

इति स्मृतेः । **श्रेयः तपः ;** अनन्यभक्तिरूपं तपः । तप्तमेव स्यात् । तदन्यथानुपपत्तिप्रमाणेन साधयति—**अन्यथेति । अन्यथा ;** तादृशतपसोऽभावे । अहं कथमद्य हरेः श्रीकृष्णस्य मुखं साक्षादीक्षे । १४४

अम्बुभिरिष्टैकरते चेतस्येवं चिराय नयनोत्थैः ।
क्लिन्नाङ्गोऽस्तमये तौ ददर्श गोष्ठाङ्गणे स बलकृष्णौ ॥ १४५ ॥

**अम्बुभिरिष्टैकरत** इति । एवं पूर्वोक्तप्रकारेण **चेतसि चिराय इष्टैकरते ;** सर्वेष्टे भगवति श्रीकृष्णे एकस्मिन् निरते सति; अनन्यभावेन निध्यानपर इत्यर्थः । **नयनोत्थैः अम्बुभिः ;** आनन्दबाष्पैः । **क्लिन्नाङ्गः** सः अक्रूरः सूर्यस्यास्तमये तौ बलरामकृष्णौ गोष्ठाङ्गणे ददर्श । १४५

क्षमास्तु न रमेश्वर श्रुतिगिरः स्वरूपं तव
प्रकाशयितुमञ्जसा विदधिरे परं मूढताम् ।
विगीतवचनास्तु ते स्तुतिषु नैव ते शक्नुमः
प्रसीद नमसेति तौ प्रणतवानसावीश्वरौ ॥ १४६ ॥

**क्षमास्तु नेति।** हे रमेश्वर, तव स्वरूपं प्रकाशयितुं न क्षमाः अक्षमाः सत्यः श्रुतिगिरः अञ्जसा सद्यः परं मूढतां विदधिरे। अत्र "यतो वाचो निवर्तन्ते। अप्राप्य मनसा सह" इति श्रुत्यर्थोऽभिप्रेतः। एवं सति विगीतवचनाः ते वयं ते तव स्तुतिषु नैव शक्नुमः। अतो नमसा प्रसीद। इति वदन् असौ अक्रूरः ईश्वरौ तौ रामकृष्णौ प्रणतवान्। १४६

लोलधीः पुत्रयोर्नन्दस्याभ्यामाश्लिष्ट एव सः।
भोज्यैः सुपूजितः कंसकथाभिरनयन्निशाम्॥ १४७॥

**लोलधीः पुत्रयोरिति।** नन्दस्य पुत्रयोः रामकृष्णयोः **लोलधीः** चञ्चलधीः। मरन्दरसास्वादे लम्पटो लोलम्ब इव तद्गुणगणास्वादे लोलुपेन मनसा युक्तः। एकस्य गुणस्यास्वादे क्रियमाणेऽन्यस्य गुणस्यास्वादे उत्कटा स्पृहा जायते। तदा तद्गुणास्वादं तत्रैव प्रघट्टके पुनरनुभवाय स्थापयित्वा धीः गुणान्तरमास्वादयितुं भजते। एवमन्यमन्यं गुणमिति चटुलबुद्धिरित्यर्थः। एषः सः अक्रूरः आभ्यां रामकृष्णाभ्यामाश्लिष्टः सन् "एष सर्वस्वभूतो मे परिष्वङ्गो मया कृतः" इत्युक्तरीत्या भगवता बलरामेण च सर्वस्वदानेन संभावितः सन्। भोज्यैः सुपूजितश्च सन् कंसस्य कथाभिः तत्संबद्धवृत्तान्तकथनैः निशाम् अनयत्। १४७

ते रौद्रा नागाद्या हननोपायाश्च कल्पिता राज्ञा।
कथितास्तेन विभाते प्रस्थितवन्तौ च तौ मधुराम्॥ १४८॥

**ते रौद्रा नागाद्या इति।** राज्ञा कंसेन कल्पिताः हनने श्रीकृष्णहनने उपायभूता रौद्राः ते नागाद्या कुवलयापीडाख्यगजाद्याः। आद्यपदेन चाणूरादयो गृह्यन्ते। तेन अक्रूरेण श्रीकृष्णाय कथिताः। यद्यपि सर्वशक्तेः श्रीकृष्णस्यैतत्कथनेन न कोऽपि लाभः, तथापि भगवद्विषये किंचित्कारं यथाशक्ति चिकीर्षन् विभीषणो राघवसंनिधौ रावणोदन्तमिव कंसस्य संविधानं न्यवेदयदिति भावः। तौ च रामकृष्णौ विभाते प्रभाते मधुरां प्रस्थितवन्तौ। १४८

विलोमकुलमाबिभ्रदपि बाल्याद्वपुर्व्रजम् ।
पाति स्म बहुशः कृष्ण भवान् दुःखत्रयार्दितम् ॥ १४९ ॥

**विलोमकुलमिति** । हे कृष्ण, भवान् विलोमकुलं विलोमजातिसंबद्धम् आभीरजातिसंबन्धीत्यर्थः, वपुः बिभ्रदपि आ बाल्यात् बाल्यमारभ्य दुःखत्रयार्दितम् आध्यात्मिकादिदुःखपीडितं व्रजं बहुशः पाति स्म अपालयत् । १४९

स मन्दो रागी निहतः शङ्खचूडो व्रजाङ्गनाः ।
हरन् विहारे युवयोर्भवता धनदानुगः ॥ १५० ॥

**स मन्दो रागीति** । युवयोः विहारे क्रीडायां व्रजाङ्गनाः हरन् मन्दः रागी च धनदानुगः कुबेरानुचरः स शङ्खचूडो नाम यक्षः भवता निहतः । १५०

तैलप्रियस्त्वम्बुजाक्ष यथा दीपोऽन्तरेण तत् ।
त्वयि याते भवत्येवं ध्रुवं व्रजवधूजनः ॥ १५१ ॥

**तैलप्रियस्त्विति** । हे अम्बुजाक्ष, तैलप्रियः दीपः तत् तैलम् अन्तरेण विना यथा भवेत्; विनश्येदिति यावत् । एवं त्वयि अस्मान् हित्वा याते सति व्रजवधूजनः ध्रुवं नश्येत् । १५१

सांप्रतं रविरश्मीनां विगमे तारका इव ।
स्फुरन्तु दंष्ट्रा दैत्यानां व्रजे स्त्रीमात्रशेषिते ॥ १५२ ॥

**सांप्रतं रविरश्मीनामिति** । सांप्रतम् अधुना रविरश्मीनां विगमे तारका नक्षत्राणीव स्त्रीमात्रशेषिते स्त्रीमात्रावशेषे व्रजे दैत्यानाम् असुराणां दंष्ट्राः स्फुरन्तु स्फुरेयुः । भवतोरपगमे असुराः व्रजमागत्यास्मान् पीडयेयुरित्यर्थः । १५२

कुलानां कर्मणामेतत् गोपानां किं नु युज्यते ।
यत् स्वभार्याजनं हित्वा पुरस्त्रीकामुको भवान् ॥ १५३ ॥

कुलानां कर्मणामिति। स्वभार्याजनं हित्वा मधुरां गत्वा तत्रत्यपुरस्त्रीषु कामुको भवानिति यत् एतत् गोपानां कुलानां कर्मणां च किं नु युज्यते? न युज्यत इत्यर्थः। १९३

श्रुत्वा स्वराणां प्रसरमिति स्त्रीणां हरिर्नरैः।
ताः समाश्वास्य स ययौ गोपाश्चोपायनैः सह ॥ १९४ ॥

श्रुत्वा स्वराणामिति। इत्येवं पूर्वोक्तरीत्या प्रवृत्तं स्त्रीणां गोपीनां स्वराणां प्रसरं प्रचारं नरैः गोपमुखैः श्रुत्वा स हरिः श्रीकृष्णः ता गोपीः समाश्वास्य मधुरां ययौ। गोपाश्च उपायनैः सह तमनुययुः। १९४

धर्मो दानं तूदकस्यात्र कार्यो मध्याह्नार्कस्येत्यमू स्यन्दनस्थौ।
कृत्वाक्रूरो दृष्टवानाप्सु मग्नस्तत्राप्येतौ शेषलक्ष्मीशचिह्नौ॥ १९५॥

धर्मो दानं त्विति। अत्र समये मध्याह्नार्कस्य मध्याह्नार्कं प्रति उदकस्य दानं कार्यः अवश्यकरणीयो धर्मः इति चिन्तयन् अक्रूरः अमू रामकृष्णौ स्यन्दनस्थौ कृत्वा रथारूढावेवावस्थाप्य तयोरनुज्ञया अप्सु मग्नः सन् स्नानार्थं जले निमग्नः सन् तत्रापि जलान्तर्भागेऽपि एतौ रामकृष्णौ क्रमेण शेषलक्ष्मीशचिह्नौ शेषनारायणरूपधारिणौ दृष्टवान्। जलनिमग्नो यदा अघमर्षणसूक्तं जपन् भगवन्तं दध्यौ तदा अमू एव शेषनारायणरूपिणावपश्यदित्यर्थः। १९५

दूष्यं गोत्रं तेन कंसेन योगात् त्वत्संभूत्या पूतमद्यास्मदीयम्।
रूपं त्वेतत्तावकं शेषसंस्थं चेतोदेशान्मामकान्नापयातु ॥ १९६ ॥

दूष्यं गोत्रं तेनेति। अनन्तरं पञ्चदशभिः श्लोकैः भगवन्तं स्तौति। तेन कंसेन योगात् दूष्यं दूषणीयमिदम् अस्मदीयं गोत्रं वंशः त्वत्संभूत्या भगवतस्तवावतारेण अद्य पूतं परिशुद्धं भवति। तावकं शेषसंस्थं शेषशायि एतत् रूपं मामकात् चेतोदेशात् नापयातु। १९६

तुलार्थिनोऽर्थिनामाढ्याः कल्याणस्पर्शने नृणाम्।
त्वं मे सकलकल्याणं दत्तवानतुलं क्षणात् ॥ १९७ ॥

**तुलार्थिनोऽर्थिनामिति** । आढ्याः धनिनः अर्थिनां नृणां धनापेक्षिणां पुरुषाणां कल्याणस्पर्शने सुवर्णदाने तुलां तोलनायार्थिनो दृश्यन्ते । दातारः सुवर्णं तुलया तोलयित्वा तावत्परिमितमेवार्थिभ्यो ददति । हे भगवन्, त्वं तु मे क्षणादेव अतुलम् अनुपमम्, तुलया तोलनरहितं च । न तुला यस्येति विग्रहः । समस्तकल्याणं निखिलं श्रेयः काञ्चनं च मे मह्यं दत्तवान् । १९७

जित्वास्य रसनाद्यक्षाण्यनिशं वपुषो बुधाः ।
स्फुरन्ति सकृदप्यस्मिन्नापरोक्ष्यं भवेदिति ॥ १९८ ॥

**जित्वास्य रसनादीति** । बुधाः अस्य वपुषः एतद्वपुःसंबन्धीनि रसनाद्यक्षाणि रसनादीन्द्रियाणि अनिशं जित्वा विषयेभ्यो निवर्त्य सकृदपि अस्मिन् मयाधुना दृश्यमाने शङ्खचक्राङ्किते शेषशायिनि भवद्रूपे आपरोक्ष्यं प्रत्यक्षं भवेदिति धिया स्फुरन्ति त्वरन्ते । १९८

श्रमणो निन्दां कुरुते बौद्धोऽपाश्रित्य यत्कृतिं वेदे ।
वेदो यश्च स याज्यो यष्टा यागश्च यो नमस्तस्मै ॥ १९९ ॥

**श्रमणो निन्दामिति** । **बौद्धः** श्रमणः; बौद्धः संभिक्षुः । **यत्कृतिम्**; असुराणां मोहनार्थं कृतां यदीयकृतिम् । **अपाश्रित्य**; प्रमाणतया अवलम्ब्य । **वेदे**; तत्त्वोपदेशैकपरे सात्त्विके वेदे । **निन्दां कुरुते**; वेदस्याप्रामाणिकतां वदति । यः स पूर्वोक्तः । वेदः; वेदस्वरूपः । यश्च **याज्यः** यागेनाराध्यः । यश्च **यष्टा**; यागानुष्ठाता । यश्च **यागः**; यज्ञस्वरूपः । तस्मै भगवते तुभ्यं नमः । १९९

षड्विधान्याहुरङ्गानि येषां तानि वचांसि यः ।
जलेऽन्विष्य ददौ धात्रे तस्मै मत्स्याय ते नमः ॥ १६० ॥

**षड्विधान्याहुरिति** । इत आरभ्य एकादशभिः श्लोकैर्भगवतो मत्स्यादिकान् दशावतारान् स्तौति । **येषाम्**; त्रयीरूपाणां वचसाम् **षड्विधानि** शीक्षादीनि **अङ्गानि** आहुः । **तानि** त्रयीरूपाणि **वचांसि** यः भगवान् **जले अन्विष्य** प्रलयकाले जलप्लावितान् साङ्गान् वेदानन्विष्य । **धात्रे**; हिरण्यगर्भाय । **ददौ**;

उपदिदेश । तस्मै; तादृशं महोपकारं कृतवते । मत्स्याय ते; मत्स्यरूपिणे तुभ्यम् । नमः अस्तु । १६०

तत्र गोर्निधिरासीद्यो भर्तुः पीयूषमन्थने ।
मन्दरस्योदधौ धृत्यै तस्मै कूर्माय ते नमः ॥ १६१ ॥

तत्र गोर्निधिरिति । यः गोः स्वर्गस्य भर्तुः; इन्द्रस्य । पीयूषमन्थने; अमृतोत्पादनाय कृते मन्थने । उदधौ मन्दरस्य पर्वतस्य धृत्यै धरणाय । निधिः; निधिरिव परमादरणीयः, अथवा निधानम् । आसीत्; तस्मै कूर्मरूपाय ते नमः । १६१

केशास्ते कालाभा नीलं पीतं च कनकनिभं च ।
यस्याङ्गानि मुखादीन्यूढभुवं त्वां नुमस्तमादिवराहम् ॥ १६२ ॥

केशास्ते कालाभा इति । यस्य ते केशाः कालाभाः कृष्णवर्णा अभवन् । यस्य मुखादीनि अङ्गानि प्रत्येकं यथासंभवं नीलं पीतं स्वर्णवर्णं चाभवन् । तम् ऊढभुवं भुवमुद्धृत्य निर्गतवन्तं त्वाम् आदिवराहरूपिणं नुमः स्तुमः । १६२

यानानि नो न ये योधा हा ममेति द्रवन् नखैः ।
तृणीकृतो रिपुर्येन नृसिंहं त्वामुपास्महे ॥ १६३ ॥

यानानि नो न य इति । यानानि; वाहनानि । नो; अद्य न सन्ति । ये मम योधाः तेऽपि नाद्य सन्ति । हा, कष्टमापतितम् । इत्युक्त्वा द्रवन्; धावन् । रिपुः; शत्रुः हिरण्यकशिपुः । येन; भगवता । नखैः तृणीकृतः; तृणमिव नखैरेव छिन्नोऽभूत् । नृसिंहम्; नृसिंहरूपिणं त्वाम् उपास्महे । १६३

यानानि नो नये चार्थाः प्राणा रक्ष्यास्तु मेऽधुना ।
इति द्रवन्नखैर्येन हतोऽरिर्नृहरिं भजे ॥ १६४ ॥

यानानि नो नय इति । नृसिंहविषयकमेव पद्यान्तरमेतत् । यानानि नो; न संनिहितानि वर्तन्ते, । अर्थाश्च नये उपयुज्यन्ते । नाधुना । अतः मे अधुना

यथाकथंचित् प्राणाः रक्ष्याः इति चिन्तयित्वा द्रवन् अरिः येन नखैरेव हतः तं नृहरिं भजे। १६४

**शिशिरे पानीयमिव प्रातरनार्तोऽसुराज्जगद्भिक्षाम्।**
**यः प्राप वितृष्णस्तं वामनवपुषं व्रजामि शरणं त्वाम् ॥ १६५ ॥**

**शिशिरे पानीयमिवेति।** यः स्वयं वितृष्णोऽपि अनार्तः पिपासयानाकुलः पुरुषः **शिशिरे** शिशिरर्तौ तत्रापि प्रातः पानीयमिव असुरात् जगद्भिक्षां प्राप, तं वामनवपुषं वामनरूपिणं त्वां शरणं व्रजामि। १६५

**भोगमात्रं नित्यमेषां स्यान्नार्थजमिति व्यधात्।**
**यो राज्ञो बहुशः पूतांस्तस्मै रामाय ते नमः ॥ १६६ ॥**

**भोगमात्रं नित्यमिति।** एषां राज्ञाम् अर्थजं धनेन जातं भोगमात्रं नित्यं न स्यात् इति मत्वा यः बहुशः राज्ञः पूतान् परिशुद्धान् अनित्यधनजातभोगवर्जितान् व्यधात् तस्मै रामाय जामदग्न्यरामरूपिणे ते नमः। १६६

**यूने दानं पथ्यं नामरमिषुभिः शमासिना पथ्यम्।**
**बहिरेव दानमिति यो रावणमनुशिष्टवान्नमस्तस्मै ॥ १६७ ॥**

**यूने दानमिति।** यूने तुभ्यम् इषुभिः बाणैः आमरम् अमरसंबन्धि दानं न पथ्यम्। किंतु शमासिना बहिरेव दानं पथ्यमिति यः रावणमनुशिष्टवान् तस्मै दाशरथये रामाय तुभ्यं नमः। १६७

**सत्येन श्रेयः स्यादिति भूताहितविधानपापगुरून्।**
**यो मुसलपातशुद्धान् न्ययुङ्क्त सत्ये जयत्वयं मुसली ॥ १६८ ॥**

**सत्येन श्रेयः स्यादिति।** नृणां सत्येन श्रेयः स्यात् इति हेतोः भूतानाम् अहितविधानमेव पापं, तेन गुरून्। "सत्यं भूतहितं प्रोक्तम्" इति भूतहिताचरणस्यैव सत्यलक्षणत्वात् भूतानामहिताचरणमसत्यमेवेति भावः। तादृशान्

पापिष्ठान् मुसलपातशुद्धान् कृत्वा यः पुनः सत्ये भूतहिताचरणे न्ययुङ्क्त, अयं मुसली; बलरामः जयतु । १६८

मुखे श्रीर्वक्षसि च यस्यामूर्ता विग्रहिण्यपि ।
केशे बर्हं करे वेणुस्तस्मै कृष्णाय ते नमः ॥ १६९ ॥

मुखे श्रीरिति । यस्य मुखे अमूर्ता श्रीः; रम्या शोभेत्यर्थः । वक्षसि च विग्रहिण्यपि; मूर्तेत्यर्थः, श्रीः आस्ते । केशे बर्हम्; मयूरपिञ्छम् । करे वेणुश्चास्ते । तस्मै श्रीकृष्णरूपिणे तुभ्यं नमः । १६९

धारावृष्टिर्यत्कृपाणस्य पापप्रायश्चित्तिः प्राणिनां स्याद्युगान्ते ।
स त्वं कल्की सर्वदैव त्वदुत्कान् कुर्वन्नस्मान्नाशय क्लेशजालम् ॥ १७० ॥

धारावृष्टिरिति । यत्कृपाणस्य यदीयखड्गस्य । धारावृष्टिः; धारैव खड्गाग्रमेव धारा जलप्रवाहः, तस्या वृष्टिः । युगान्ते कलियुगस्यान्ते प्राणिनां पापस्य प्रायश्चित्तिर्भवति । सः कल्की; कल्कः श्वेताश्वः स वाहनं यस्य सः । त्वं सर्वदैव सर्वकालेऽपि अस्मान् त्वदुत्कान् त्वयि निवेशितमनस्कान् कुर्वन् क्लेशजालम् आध्यात्मिकादिदुःखजातं नाशय । १७०

पलितं राज्ञादिष्टे काले भवदस्य नावगतमिति कृतधीः ।
इत्थं स्तुतिनिरतेऽस्मिन् हरिस्तिरोधाज्जगाम स च पुरमाभ्याम् ॥

पलितं राज्ञेति । आदिष्टे काले; आज्ञाकाले अस्य अक्रूरस्य भवत् पलितं ज्ञानवृद्धत्वं राज्ञा कंसेन नावगतं न ज्ञातमिति कृतधीः अयं हरिः श्रीकृष्णः अस्मिन् अक्रूरे स्तुतिनिरते स्तोत्रं कुर्वाण एव तिरोऽधात् तिरोबभूव । स च; अक्रूरश्च । आभ्यां रामकृष्णाभ्यां सह पुरं जगाम । १७१

तैलजा नार्याभरणजन्या वा सुषमाखिला ।
द्रुतं पौरैर्धृता तत्र वासुदेवदिदृक्षुभिः ॥ १७२ ॥

**तैलजा नारीति** । तत्र पुरे वासुदेवदिदृक्षुभिः वासुदेवं द्रष्टुमुत्सुकैः पौरैः तैलजा सुगन्धितैलप्रसाधनजन्या नार्याभरणजन्या वा; नारीणामाभरणैर्जन्या वा या सुषमा परमा शोभा, सा अखिलापि द्रुतं शीघ्रमेव धृता । श्रीकृष्णसंदर्शनार्थं सर्वेऽपि पौराः स्वान् अलंचक्रुरित्यर्थः । १७२

ताभिर्न रेजुः प्रथमं कृताभिर्वध्येऽप्यरं भेदपरिक्रियाभिः ।
हन्तुर्यशांसीति हरिः प्रविश्य चकार कर्माण्यतिमानुषाणि ॥१७३॥

**ताभिर्न रेजुरिति** । प्रथमं कृताभिः ताभिः वध्ये अरम् अत्यन्तं भेदपरिक्रियाभिः भेदनक्रियाभिः हन्तुः नाशकर्तुः स्वस्य यशांसि न रेजुः इति विचिन्त्य हरिः मधुरां प्रविश्य अतिमानुषाणि मनुष्यैः कर्तुमशक्यानि कर्माणि चकार । १७३

मीनलग्नोऽत्र केतुर्न न स चापस्तथाप्यमुम् ।
अनन्यसदृशं रूपं विज्ञापयति मन्मथम् ॥ १७४ ॥

मीनलग्नोऽत्रेति । अत्र श्रीकृष्णे केतुः ध्वजः न मीनलग्नः; न मत्स्यसहितः । मन्मथस्य केतुरिव न मीनसंबद्ध इत्यर्थः । चापश्च न सः; न तादृशः, न कुसुमरूप इत्यर्थः । तथापि अनन्यसदृशम् अनन्यसाधारणं रूपं अमुं श्रीकृष्णम् मन्मथं विज्ञापयति लोकस्येति शेषः । मधुरायां विद्यमाना जना अमुं मन्मथमेव मेनिरे इत्यर्थः । १७४

तालमध्ये श्रियः सद्म घनं नीलं यदीष्यते ।
उपमीयेत तेनास्य दोर्मध्यं वसतिः श्रियः ॥ १७५ ॥

**तालमध्य इति** । **तालमध्ये**; तालवृक्षयोर्मध्ये घनं सान्द्रं नीलं नीलवर्णं श्रियः सद्म वासस्थानं यदीष्यते, तदा श्रियः वसतिः वासस्थानम् अस्य श्रीकृष्णस्य दोर्मध्यं बाहुमध्यं वक्षः तेन उपमीयेतेति कविकल्पितोपमा । १७५

नोग्रो भारो राज्ञा चाणूरो योज्यतामनेन रणे ।
इति पौरवर्णितगुणः पथि रजकमयाचताथ वसनानि ॥ १७६ ॥

**नोग्रो भार इति**। राज्ञा कंसेन रणे युद्धे अनेन सह उग्रः भारः असह्यभारवत् अत्युग्रः चाणूरः तदाख्यः मल्लः न योज्यताम्। इति पौरैः जनैर्वर्णितगुणभरितः सः श्रीकृष्णः पथि मध्येमार्गं रजकं कंसस्य वसनानि उपहरन्तं निर्णेजकं वसनानि अयाचत। १७६

धान्यस्य कालं नय मा वृथात्र कक्ष्येष्वलभ्यस्य कुरुष्व याच्ञाम्।
पौरेषु जीर्णक्षतवाससां चेत्युच्चैः क्षिपन्तं रजकं नृपस्य ॥ १७७ ॥

**धान्यस्य कालमिति**। अलभ्यस्य लब्धुमशक्यस्य धान्यस्य कक्ष्येषु पक्ष्येषु कालं वृथा मा नय। अलभ्ये वस्तुनि स्पृहया कालं वृथा मा क्षपयेत्यर्थः। पौरेषु गत्वा जीर्णानां क्षतानां च वाससां वसनानां याच्ञां कुरुष्वेत्युच्चैः क्षिपन्तं नृपस्य रजकम्, उत्तमाङ्गहीनमकरोदित्युत्तरेणान्वयः। १७७

वर्गे त्वं खल भव राजकेऽद्य याम्ये प्रोच्येति प्रभुरकृतोत्तमाङ्गहीनम्।
गोपालैः सह रुचिरं हरिर्वसित्वा वासांस्यप्यथ गृहमीयतुः सुदाम्नः ॥

**वर्गे त्वं खलेति**। हे खल दुष्ट रजक, त्वं याम्ये यमसंबन्धिनि राजके रजकसंबन्धिनि वर्गे रजकसमूह इत्यर्थः। भव; इति प्रोच्य प्रभुः श्रीकृष्णः तम् उत्तमाङ्गहीनं छिन्नशिरस्कम् अकृत। अवधीदित्यर्थः। अथ तद्वधानन्तरं वासांसि तेन हृतानि वसनानि रुचिरं यथा तथा गोपालैः सह स्वयमपि वसित्वा धृत्वा सुदाम्नः तन्नामकस्य मालाकारस्य गृहं तौ रामकृष्णौ ईयतुः प्रापतुः। १७८

श्वानो दीनो वागता ये गृहान्नः प्राप्ताः पूज्या विष्णुबुद्ध्येति पश्यन्।
मालाभिस्तौ पूजयित्वा स लेभे यावत्कल्पं तन्तुमत्तां श्रियं च ॥ १७९ ॥

**श्वानो दीनो वेति**। नः अस्माकं गृहान् गृहाणि ये श्वानः दीनो वा आर्तो वा आगताः ते प्राप्ताः सर्वेऽपि विष्णुबुद्ध्या पूज्याः इति पश्यन् सः सुदामा तौ रामकृष्णौ मालाभिः पूजयित्वा यावत्कल्पं ब्रह्मकल्पावसानपर्यन्तं तन्तुमत्तां संततिं श्रियं च लेभे। १७९

धवः कारवरूपाद्यैर्धन्ये त्वन्यां न यातु ते ।
इति कुब्जां व्यधादृज्वीमथैष पथि संचरन् ॥ १८० ॥

**धवः कारवेति**। अनेन कुब्जावृत्तान्तमाह । हे धन्ये, ते धवः पतिः ते **कारवरूपाद्यैः**; "कारवः काकः" इति त्रिकाण्डशेषः । तस्येव यानि रूपादीनि, तैः । अन्यां कान्तां न यातु । तव विकृतानि रूपादीनि दृष्ट्वा त्वयि अप्रीत्या अन्यां स्त्रियं तव भर्ता न यात्वित्यर्थः । इति उक्त्वा **पथि संचरन्** एषः श्रीकृष्णः **कुब्जां** भुग्नाकृतिं कंसस्य गन्धानुपनयन्तीं कांचित् सैरन्ध्रीम् ऋज्वीं व्यधात् । १८०

क्षोभः शनैः शनैः स्मारस्तस्याः कृष्णाङ्गसङ्गजः ।
तया तं वारयामास मा गा इति नृपाध्वनि ॥ १८१ ॥

**क्षोभः शनैः शनैरिति** । कृष्णाङ्गसङ्गजः श्रीकृष्णस्याङ्गसंबन्धेन जातः तस्याः सैरन्ध्र्याः **शनैः शनैः** क्रमशः अभिवृद्धः **स्मारः** कामजः **क्षोभः** मनसः चपलता **नृपाध्वनि** राजमार्गे एव तं श्रीकृष्णं मा गाः मा गच्छेति तया सैरन्ध्र्या प्रयोज्यकर्त्र्या वारयामास । अत्र स्मारक्षोभस्यात्युत्कटत्वं दर्शयितुं तस्यैव प्रयोजककर्तृत्वं सैरन्ध्र्यः प्रयोज्यकर्तृत्वं च विवक्षितं कविना । नृपाध्वनीत्यनेन बहुजनसंनिधानमप्यनादृत्य कामावेदनमुच्यते । "कामातुराणां न भयं न लज्जा" इति हि लोकोक्तिः । १८१

गोशुद्धिकामाः किमु गाः स्पृशन्ति मर्त्या युवत्यां च तथैव यूनाम् ।
स्वार्थानि कर्माणि तदागमिष्याम्युक्त्वेति तामाप स चापशालाम् ॥

**गोशुद्धिकामा इति** । **मर्त्याः** जनाः गाः धेनूः **गोशुद्धिकामाः** गवां शुद्धिमुत्पादयितुकामाः **स्पृशन्ति किमु**? नैवेत्यर्थः । किं तु आत्मनां शुद्धिमुत्पादयितुमेव स्पृशन्ति । तथैव यूनां युवत्यां प्रवृत्तानि कर्माणि स्वार्थान्येव, न तु युवत्यर्थानि । अतोऽहं त्वया न प्रार्थनीय इत्यर्थः । यत एवं, तत् तस्मात् अहमेव पुनरागमिष्यामीति तां सैरन्ध्रीम् उक्त्वा सः श्रीकृष्णः चापशालाम् आप । १८२

दीनो वो ज्ञातिरपि श्राव्यो राज्ञेति चापरक्षिबलम् ।
हत्वा चापच्छेदक्षुभितं तौ प्रस्थितौ हरी रथ्याम् ॥ १८३ ॥

**दीनो वो ज्ञातिरिति** । **दीनः**; युष्माकं वधेन शोचन् **वः** युष्माकं **ज्ञातिः** बन्धुः **राज्ञा** कंसेनैव **श्राव्यः** । युष्मद्विपत्तिमिति शेषः । युष्मान् निःशेषं हनिष्यामि, यथा कश्चिदपि वो बन्धूनां वार्ताहरो न परिशिष्येतेति भावः । इत्युक्त्वा **चापच्छेदक्षुभितं** चापशालास्थस्य कंसचापस्य छेदेन क्रुद्धं **चापरक्षिबलं** चापरक्षणाय नियुक्तं सैन्यं **हत्वा तौ हरी** रामकृष्णौ **रथ्यां** वीथ्यां **प्रस्थितौ** । १८३

सत्रे दीयत एवात्मा तेन स्वेनैव मृत्यवे ।
योऽनुगच्छेदिमौ योद्धुमिति तौ नान्वयुर्भटाः ॥ १८४ ॥

**सत्रे दीयत इति** । **यः इमौ** रामकृष्णौ **योद्धुम् अनुगच्छेत् तेन स्वेनैव मृत्यवे आत्मा सत्रे** धनुर्यागे **दीयते** । **इति** मत्वा **भटाः तौ** रामकृष्णौ **न अन्वयुः** नान्वगच्छन् । १८४

शोभा राज्ञां सेना विरोधिनोत्सादितेव नो दृश्या ।
तावपि बाह्योपवने नन्दाद्यैरूषतुश्च तां रजनीम् ॥ १८५ ॥

**शोभा राज्ञां सेनेति** । **राज्ञां शोभा** शोभावहा **सेना** कंसस्य सेना **विरोधिना** शत्रुणा **उत्सादितेव** नाशितेव **नो दृश्या** न ददृशे । **तावपि** रामकृष्णावपि **बाह्योपवने** नगरात् बहिः स्थिते उपवने **नन्दाद्यैः** सह **तां रजनीम् ऊषतुश्च** । १८५

आज्ञा साध्या सकला कंसकृतेत्यात्तनिश्चया मल्लाः ।
उदिते रङ्गं जग्मुर्द्वारं हस्ती दिदृक्षवो मञ्चान् ॥ १८६ ॥

**आज्ञा साध्येति** । कंसकृता **सकला आज्ञा साध्या** साधनीया; अस्माभिरिति शेषः । **इत्येवम् आत्तनिश्चयाः** कृतनिश्चया **मल्ला** द्वन्द्वयुद्धविशारदाः

योधाः उदिते सूर्ये उदिते सति रङ्गं युद्धाय परिकल्पितं स्थानं जग्मुः। हस्ती च द्वारं जगाम। दिदृक्षवो जनाश्च मञ्चान् रङ्गस्थासनानि जग्मुः। १८६

नटस्यानन्दनस्याक्ष्णामिव कृष्णस्य रङ्गिणः।
यदा प्रवेशधीरेष तदादृश्यत साग्रजः॥ १८७॥

नटस्यानन्दनस्येति। अक्ष्णां नाट्यरङ्गस्थजनलोचनानाम् आनन्दनस्य आनन्दकरस्य रङ्गिणः रङ्गविहरणशीलस्य नटस्येव कृष्णस्य यदा प्रवेशे रङ्गप्रवेशे धीः इच्छा, उदियायेति शेषः, तदैव एष श्रीकृष्णः साग्रजः बलरामेण सह रङ्गे अदृश्यत। १८७

धनेशोऽयं जनः सत्यं माथुरः सिन्धुरोत्तमः।
मार्गरोधिनमेनं तु हन्मि हस्तिप हस्तिनम्॥ १८८॥

धनेशोऽयमिति। अयं जनः; रङ्गे आसनोपविष्टः अग्रतो दृश्यमानोऽयं जनः। सत्यं धनेशः; राजा कंस इति निश्चितः। तथा अय च माथुरः मथुरायां भवः सिन्धुरोत्तमः गजवरः कुवलयापीड एव। मार्गरोधिनम्; रङ्गप्रवेशमार्गमवरुध्य तिष्ठन्तम्। एनं हस्तिनम्; ते गजम्। हे हस्तिप, अहं हन्मि। १८८

स मन्दो ह्रदवत्तस्मिन् हस्तिपः कालचोदितः।
एवमाभाष्यमाणोऽपि हरिणाचोदयद्गजम्॥ १८९॥

स मन्दो ह्रदवदिति। एवम्; उक्तप्रकारेण हरिणा आभाष्यमाणोऽपि ह्रदवत् जलाशयवत् मन्दः जडः सः हस्तिपः कालेन मृत्युना चोदितः गजं तस्मिन् श्रीकृष्णे अचोदयत्। श्रीकृष्णं हन्तुं नियोजयामास। १८९

नागरो युद्धमेतेन जनः पश्यत्विति प्रभुः।
स्वयमाहत्य भङ्क्त्वास्य प्रहारान् व्यहरच्चिरम्॥ १९०॥

**नागरो युद्धमिति ।** **नागरो** जनः; मधुरायां विद्यमानो जनः सर्वोऽपि । **एतेन;** गजेन सह । **युद्धं** पश्यतु इति मत्वा **प्रभुः** श्रीकृष्णः **स्वयम्** **आहत्य;** गजं प्रहृत्य । **अस्य** गजस्य **प्रहारान्** **भङ्क्त्वा** भग्नान् कृत्वा च **चिरं** व्यहरत् चिक्रीड । १९०

धीवशक्रोधतां चास्य भङ्क्तुं हस्ती तु नाशकत् ।
हत्वेभं तद्भटांश्चाथ मल्लानाप स केशवः ॥ १९१ ॥

**धीवशक्रोधतामिति ।** **हस्ती तु अस्य** श्रीकृष्णस्य **धीवशक्रोधताम्** स्वेच्छावतारितं कोपं **भङ्क्तुं नाशकत्** न शशाक । अथ स केशवः इभं गजं तद्भटांश्च तत्पालकान् योधांश्च हत्वा मल्लान् चाणूरादीन् बाहुयुद्धविशारदान् आप । १९१

श्रमो दीनो नित्यमेव नियुद्धे क्रियते त्वया ।
तच्चातुरीं दर्शयाद्य मयि राजा दिदृक्षते ॥ १९२ ॥

**श्रमो दीन इति ।** हे कृष्ण, त्वया नित्यमेव नियुद्धे बाहुयुद्धे श्रमः दीनः क्रियते । तत्र श्रमं न वहसीत्यर्थः । अद्य मयि तच्चातुरीं बाहुयुद्धचातुर्यं दर्शय । राजा कंसमहाराजः दिदृक्षते द्रष्टुमिच्छति । यतः प्रजानां राजप्रीतिसंपादनं धर्मः, ततो दर्शयेत्यर्थः । १९२

धूली स्याद्राज्ञा यः कृतो दृढोऽस्मिन् पदार्दिते रङ्गे ।
इति जल्पंश्चाणूरो हरिणार्येणेतरे हता मल्लाः ॥ १९३ ॥

**धूली स्याद्राज्ञेति ।** यः रङ्गः राज्ञा दृढः कठिनः कृतः, **अस्मिन् रङ्गे पदा अर्दिते** सति; नियुद्धसमये आवयोः पादताडनेन पीडिते सतीत्यर्थः । **धूली स्यात्;** प्रादुर्भवतु । इति जल्पन् **चाणूरो** मल्लः **हरिणा** हतः । **इतरे;** चाणूरादितरे मल्लाः मुष्टिकाद्याः आर्येण श्रीकृष्णाग्रजेन बलभद्रेण हताः । १९३

बाह्यवने योग्यमितो निःसारणमेतयोरिति क्षितिपे ।
क्रुध्यति तमपि निपात्य प्रासादाग्रादशातयत्कृष्णः ॥ १९४ ॥

**बाह्यवने योग्यमिति** । एतयोः रामकृष्णयोः इतः अस्मात् प्रदेशात् बाह्यवने नगरात् बहिर्भवे वने निःसारणं योग्यमिति क्षितिपे कंसे राजनि क्रुध्यति सति श्रीकृष्णः तमपि कंसमपि प्रासादाग्रात् निपात्य अधः पातयित्वा अशातयत् अवधीत् । १९४

विगतपापोऽयमप्याप देही हरिं तदनुजांस्त्वष्ट तान् रौहिणेयोऽवधीत् ।
पितरमप्यानतौ मातरं चाथ तौ गलितबन्धं नृपं चक्रतुश्चाहुकम् ॥

**विगतपापोऽयमिति** । अयं देह्यपि कंसोऽपि विगतपापः सन् **हरिम्** **आप**; मुक्तिं प्राप । "कामाद्गोप्यो भयात्कंसः" इत्युक्तरीत्या सततं श्रीकृष्ण-ध्यानमहिम्ना तद्धस्तवधेन च "अश्व इव रोमाणि विधूय पापम्" इति श्रुत्यर्था-नुसारेण सकलमपि पापं विधूय हरेः पदमवापेत्यर्थः । **तदनुजान्**; कंसानुजान् कङ्कादीन् अष्ट तान् देहिनः रौहिणेयः बलभद्रः अवधीत् । **अथ तौ** रामकृष्णौ **पितरमपि मातरं च** वसुदेवं देवकीमपि आनतौ प्रणेमतुः । तथा आहुकं नृपं गलितबन्धं चक्रतुश्च । १९५

तावदत्र कुर्युगे कृते यथा तथाभवत्
तावपि द्विजन्मतां प्रपद्य जग्मतुर्गुरून्
आत्तविद्यकौ ततः सषष्टिभिश्चतुर्दिनै-
रब्धिकुक्षिमीयतुर्मृतार्भकेप्सया गुरोः ॥ १९६ ॥

**तावदत्र कुर्युग इति** । कुः भूमिः कृते युगे **यथा**; धर्मप्रचुरे कृतयुगे यथा अभवत्, तथा **अत्र** अस्मिन् युगेऽपि **तावदभवत्** साकल्येना-भवत् । "यावत्तावच्च साकल्ये" इति निघण्टुः । **तावपि**; रामकृष्णावपि । **द्विजन्मताम्**; जातकर्मादिसंस्कारैः द्विजत्वम्, "जन्मना जायते शूद्रः

कर्मणा जायते द्विजः” इति स्मरणात्। **प्रपद्य**; प्राप्य। **गुरुम्**; आचार्यं सांदीपिनिम्। **जग्मतुः**; गुरुकुलवासाय तत्समीपमुपसेदुः। **ततः**; तस्मादाचार्यात्। **सषष्टिभिः चतुर्दिनैः**; चतुःषष्टिपरिमितैर्दिनैः। **आत्तविद्यकौ**; अवाप्तसमस्तविद्यौ। **गुरोः**; आचार्यस्य सांदीपिनेः **मृतार्भकेप्सया** मृतपुत्रप्रत्याजिहीर्षया **अब्धिकुक्षिं** समुद्रकुहरम् **ईयतुः** प्रापतुः। १९६

ग्रामो नष्टो येन तं ब्राह्मणानां हत्वा दैत्यं पाञ्चजन्यं तदस्थि।
लब्ध्वावाप्य प्रेतनाथात् कुमारं दत्वाचार्यायापतुस्तौ पुरीं स्वाम्॥

**ग्रामो नष्ट इति**। येन दैत्येन ब्राह्मणानां ग्रामः नष्टः अभवत् तं पञ्चजनं नाम **दैत्यं हत्वा तदस्थि पाञ्चजन्यं** तन्नामकशङ्खात्मकं **लब्ध्वा प्रेतनाथात्** यमात् **कुमारम्** आचार्यकुमारम् **अवाप्य** तमाचार्याय **दत्वा तौ स्वां पुरीं** मधुराम् **आपतुः** प्रापतुः। १९७

शशी रात्रौ साक्षी रविरहनि यद्भक्त्यतिशये
हरिः संदेशैस्तं व्रजमसुखयच्चोद्धवहृतैः।
ऋतां चक्रे कुब्जां प्रति गिरमपि स्वल्पसुकृता-
मथाक्रूरातिथ्यं स्वयमभजतार्योद्धवयुतः॥ १९८॥

**शशी रात्राविति**। **यद्भक्त्यतिशये**; यस्य व्रजस्य व्रजस्थजनस्येत्यर्थः, भक्तेरतिशये। **रात्रौ शशी साक्षी**। **रविरहनि**; साक्षीति शेषः। **तं व्रजम्**; तत्रत्यं जनम्। **उद्धवहृतैः**; उद्धवमुखेन प्रेषितैः **संदेशैः हरिः असुखयत्**; सुखितमकरोत्। **स्वल्पसुकृतां कुब्जां प्रति** पूर्वोदाहृतां स्वस्य **गिरमपि** पुनरागमिष्यामीति वाचमपि **ऋतां** सत्यां **चक्रे**। तस्या मनोरथमपूरयदित्यर्थः। **अथ आर्योद्धवयुतः**; आर्येण बलभद्रेणोद्धवेन च सहितः सन् **स्वयम् अक्रूरातिथ्यम्** अक्रूरेण कृतमतिथिसत्कारम् **अभजत**। १९८

दुःशिवा नष्टपतयः कंसदारास्तु मागधम्।
प्रारुदन् प्राप्य सोऽभ्यायात् त्रयोविंशत्यनीकपः॥ १९९॥

दुःशिवा नष्टपतय इति । कंसदाराः; कंसस्य पत्न्यः । नष्टपतयः, अत एव दुःस्थित्यापन्नशिवाः भूत्वा मागधं मगधदेशाधिपं जरासन्धं प्राप्य प्रारुदन् । त्रयोविंशत्यनीकपः, त्रयोविंशतिसंख्याकानामनीकानाम् अक्षौहिणीनामधिपः सोऽपि जरासन्धोऽपि आयात् युद्धार्थमाजगाम । १९९

भानुः सत्यस्येव शौरेर्वशेऽभूच्छस्त्रग्रामः सीरिणश्चाथ पूर्वः ।
सैन्यध्वान्ते तेन शान्ते द्रवन्तं भीत्या रामो मागधं बन्धुमैच्छत् ॥

भानुः सत्यस्येति । सत्यस्य भानुरिव; यथा सत्यवशो भानुः प्रत्यहं नियते काल उदेति अस्तमयते च, तथा शौरेः श्रीकृष्णस्य सीरिणो बलरामस्य च पूर्वः अवतारात्पूर्वकालसंबन्धी शस्त्रग्रामः आयुधजातं वशे अभूत् । तेन शस्त्रग्रामेण सैन्यध्वान्ते सैन्य एव तमसि शान्ते सति पद्भ्यां भीत्या द्रवन्तं पलायमानं मागधं जरासन्धं रामः बलरामः बन्धुं निगलयितुम् ऐच्छत् । २००

दयार्धं श्रेयसा हीनं कृतघ्नविषयं कृतम् ।
तनोति विषयं ह्याद्येत्यमोचयदमुं हरिः ॥ २०१ ॥

दयार्धं श्रेयसेति । आद्या दया; प्रथमापराधे क्रियमाणा महतां दया श्रेयसा हीनमपि कृतघ्नानां विषयतया कृतमपि पुरुषम् अर्धं विषयं तनोति ईषत् दयनीयं करोति इति मत्वा हरिः अमुं जरासन्धम् अमोचयत् । २०१

प्रभा याः पुत्रयोर्नन्दस्यासन् युद्धे जयश्रिया ।
तयोः षोडशकृत्वस्ता भूयोऽप्यासन्नथो हरेः ॥ २०२ ॥

प्रभा याः पुत्रयोरिति । नन्दस्य तयोः पुत्रयोः रामकृष्णयोः युद्धे जयश्रिया जरासन्धेन सह युद्धे संजातया जयलक्ष्म्या याः प्रभाः आसन्, ताः प्रभाः जयश्रीसंजाताः शोभाः अथो अनन्तरमपि हरेः श्रीकृष्णस्य षोडशवारं भूयः पुनः पुनः आसन् । षोडशकृत्वः जरासन्धं विजित्य शुशुभे इत्यर्थः । २०२

हर्यश्वश्रेष्ठगीर्वाणभयदो यवनः पुरीम् ।
रुरोध मधुरामब्धौ तदा स द्वारकां व्यधात् ॥ २०३ ॥

**हर्यश्वश्रेष्ठेति** । हर्यश्वः इन्द्रः स श्रेष्ठो येषां तेषां गीर्वाणानां भयदः भयजनकः यवनः कालयवनो नाम कश्चित् मधुरां पुरीं रुरोध । तदा सः श्रीकृष्णः अब्धौ द्वारकां तदाख्यां नगरीं व्यधात् निर्मितवान् । २०३

धनुः सेनाङ्गं वा रथतुरगदन्त्यादि निजकं
निधायास्यां मायी निखिलमथ निष्क्रम्य नगरात् ।
द्रवन्नद्रेर्निद्राविवशमुचुकुन्दोषितगुहां
निलीनोऽभूत्कृष्णः स च रिपुरमुं देशमविशत् ॥ २०४ ॥

**धनुः सेनाङ्गमिति** । **अथ**; द्वारकानिर्माणानन्तरम् । **मायी**; इच्छामात्रेण विचित्रसृष्टिकर्ता श्रीकृष्णः । "इच्छमात्रं प्रभोः सृष्टिः" "सोऽकामयत । बहु स्यां प्रजायेयेति । इदं सर्वमसृजत" इत्याद्युक्तिरीत्या संकलपमात्रेण निखिलजगत्स्रष्टुः द्वारकामात्रनिर्माणं कियदिति विस्मयते कविः । **निजकम्**; निजं स्वकीयम् । धनुः, रथतुरगदन्त्यादि सेनाङ्गं वा अन्यदपि यद्यत् स्वासाधारणं वस्तु, तन्निखिलमपि अस्यां द्वारकायां निधाय नगरात् द्वारकायाः निष्क्रम्य **द्रवन्** धावन्; मुचुकुन्दस्य परमभागवतस्य स्वदिव्यरूपप्रदर्शनेनानुग्रहं कर्तुं धावनमभिनयन् । **अद्रेः**; कस्यचित् गिरेः **निद्राविवशमुचुकुन्दोषितगुहां** निद्राया विवशो यः मुचुकुन्दः, तेनोषितां गुहां द्रवन्नित्यन्वयः । निलीनः अभूत् । **स च रिपुः**; यवनश्च । **तं देशम्**; तामेव गिरिगुहाम् अविशत् । २०४

शाक्यज्ञो रागी तद्विहितेऽसौ नाप्नुयाद्ध्रुवं मत्तः ।
नरकं यात्विति साधुक्रोधहतं व्यधित तत्र शौरिररिम् ॥ २०५ ॥

**शाक्यज्ञो रागीति** । **असौ**; शत्रुर्यवनः । **शाक्यज्ञः**; शाको नाम यवनानां भूपतिः । तेन प्रवर्तितो मार्गः शाक्यः । तं जानाति । **तद्विहिते**;

शाक्यमार्गविहिते प्राणिहिंसनादिरूपे असौ **रागी** रागवान् भवति। तस्मात् मत्तः वधं नाप्नुयात्। मया हतस्य हि सर्वकर्मक्षयपूर्वकनिःश्रेयसप्राप्तिः फलम्। तच्च फलमधुना असौ नार्हति। किं तु नरकं यातु इति मत्वा शौरिः श्रीकृष्णः अरिं यवनं तत्रैव साधुक्रोधहतं साधोर्मुचुकुन्दस्य क्रोधेन हतं भस्मसात्कृतं व्यधित। २०५

**सलिलं नवमेघस्त्वं वहन्निव महाप्रभः।**
**कोऽसीति पृच्छते राज्ञे स्वात्मज्ञानमदात्प्रभुः॥ २०६॥**

**सलिलं नवमेघ इति।** सलिलं वहन् नवो मेघ इव महाप्रभः महत्या प्रभया विराजमानः त्वं कोऽसि? इति पृच्छते राज्ञे मुचुकुन्दाय ऐक्ष्वाकाय राज्ञे प्रभुः श्रीकृष्णः स्वात्मज्ञानं ब्रह्मज्ञानम् अदात्। २०६

**वैद्यः स कविना गर्गेणोदितं च वचः स्मरन्।**
**स्तुत्वा हरिं ययौ राजा तपसे गन्धमादनम्॥ २०७॥**

**वैद्यः स कविनेति। वैद्यः**; विद्यां वेत्तीति वैद्यः। पूर्वश्लोकोक्तरीत्या ब्रह्मविद्यावेदी सः राजा मुचुकुन्दश्च कविना त्रिकालज्ञेन गर्गेण मुनिना उदितं वचः स्मरन् हरिं स्तुत्वा तपसे तपसः आचरणाय गन्धमादनं पर्वतं ययौ। २०७

**मेनका नाम युद्धेऽद्य जयश्रीर्वा वृणोतु माम्।**
**न निवर्तेऽन्यथेत्यागाद्योद्धुं भूयोऽपि मागधः॥ २०८॥**

**मेनका नामेति।** अद्य अस्मिन्नहनि क्रियमाणे युद्धे मां मेनका नाम मेनकेति प्रसिद्धा सुरवनिता अथवा जयश्रीर्वा वृणोतु। अहं वा शत्रुं हनिष्यामि, अहं वा शत्रुणा हनिष्ये। उभयोरन्यतरत् निश्चितमित्यर्थः। **अन्यथा**; पूर्वोक्तयोरन्यतरत् अप्राप्य न निवर्ते इति वदन् मागधः मगधाधिपतिः जरासन्धः भूयोऽपि योद्धुम् आगात् आजगाम। २०८

सेनामध्यमसौ गतिद्वयपरोऽध्यास्ते परं सांप्रतं
तत्रैका मृतिसंश्रया मृतिरमुष्यान्येन कालान्तरे ।
नान्या मत्प्रतियोद्धुरित्युदितधीरारुह्य शैलं जवा-
दह्नायाकृत साग्रजो हरिरमुं जिह्मेन मोघोद्यमम् ॥ २०९ ॥

सेनामध्यमसाविति । असौ जरासन्धः सांप्रतम् अधुना सेनामध्यं गतिद्वयपरः द्विविधां गतिं निश्चित्य परम् अध्यास्ते । तत्र तयोर्गत्योः एका गतिः मृतिसंश्रया मरणप्राप्तिविषया । अमुष्य मृतिः अन्येन भीमेन कालान्तरे भविष्यति । अतोऽत्र स मया न हन्तव्य इत्यर्थः । अन्या गतिः जयसंश्रया जयप्राप्तिविषया । मत्प्रतियोद्धुः ; मया सह प्रतिकूलं युद्धं कुर्वतः न ; भवितुं न योग्या । मया सह प्रतियुद्धं कुर्वतः जयः कदापि कस्यचिदपि न भवेदित्यर्थः । इति उदितधीः हरिः श्रीकृष्णः साग्रजः बलरामेण सह अह्नाय शीघ्रं जवात् वेगेन शैलम् आरुह्य जिह्मेन कपटेन अमुं जरासन्धं मोघोद्यमं व्यर्थप्रयत्नम् अकृत । शैलमारुह्य दुर्गं प्रदेशं जगाम । जरासन्धोऽपि श्रीकृष्णगमनमार्गमनवगच्छन् वितथप्रयत्नो निजं पुरं प्रत्याजगामेत्यर्थः । २०९

संयुद्धक्रमनिरतः शुचिर्वदान्यो
नान्योऽस्माद्धिरमिति वैधसीं निशम्य ।
रामायादिशदथ रेवतीं ककुद्मी
सोऽप्येनामतुलमवाप्य शर्म लेभे ॥ २१० ॥

संयुद्धक्रमनिरत इति । संयुद्धस्य गदायुद्धस्य क्रमे निरतः व्यापृतः शुचिः त्रिकरणशुद्धिमान् वदान्यो दाता च पुरुषश्रेष्ठः अस्मात् अन्यः बलभद्रं विना इतरः नास्ति इति वैधसीं ब्रह्मणोदीरितां गिरं निशम्य श्रुत्वा ककुद्मी नाम नृपतिः रेवतीं नाम कन्यां रामाय बलरामायादिशत् । सोऽपि बलभद्रोऽपि एनां रेवतीम् अवाप्य अतुलं शर्म सुखं लेभे । २१०

स्वर्गलोकोऽस्ति वास्तव्यमात्रं सुत्रामसोदरे ।
भूमिष्ठे तु वरिष्ठानि भोग्यान्यत्रैव यत्र सः ॥ २११ ॥

**स्वर्गलोकोऽस्तीति** । सुत्रामसोदरे उपेन्द्रे विष्णौ भूमिष्ठे भूमौ श्रीकृष्णरूपेणावतीर्णे सति स्वर्गलोकः वास्तव्यमात्रं केवलं वासस्थानमेवास्ति, न भोगस्थानमित्यर्थः । सः श्रीकृष्णः यत्र स्थले अवतीर्णः, अत्रैव वरिष्ठानि भोग्यानि सन्ति । २११

गुणोऽर्थरतिपुत्रादिपोषकः कमितृप्रियः ।
यस्यां सर्वोऽप्यसौ रुक्मिण्याह दूतीगिरा हरिम् ॥ २१२ ॥

**गुणोऽर्थरतिपुत्रादीति** । यस्यां रुक्मिण्यां देव्यां गुणः स्पृहणीयो गुणः, अर्थस्य रतेः पुत्रादेः पोषकः कमितुः प्रियश्च, अन्यश्च यः कश्चित् अभिलषणीयः गुणः स सर्वोऽप्यस्ति, असौ रुक्मिणी नाम विदर्भराजस्य दुहिता दूतीगिरा हरिम् आह । २१२

काव्यप्रियोऽसौ हि जनः समस्तः पुमर्थदाय्यस्ति च काव्यमत्र ।
तेन स्फुरत्वेष जनः सनाथः क्षिणोति यन्नाम शिवेतराणि ॥२१३॥

**काव्यप्रियोऽसाविति** । असौ लोके वास्तव्यः समस्तोऽपि जनः काव्यप्रियो हि; सत्काव्यश्रवणे उत्सुको हि । अत्र पुमर्थदायि पुरुषार्थदानसमर्थं काव्यमस्ति च । यन्नाम यस्य पुरुषोत्तमस्य नाम शिवेतराणि निखिलान्यमङ्गलानि क्षिणोति उच्चारितमात्रमेव नाशयति, तेन पुरुषोत्तमेन भवता एषः जनः काव्यप्रणेता जनः सनाथः नाथसहितः स्फुरतु प्रकाशताम् । मम त्वं नाथो भवेति यावत् । २१३

भद्रतरोऽर्थी वाणी भद्रतमास्येति चाभिनन्द्य मुहुः ।
श्रुत्वेत्थं दूतिगिरं श्रीपतिरतनोन्मनीषितं तस्याः ॥ २१४ ॥

**भद्रतरोऽर्थीति**। इत्थं पूर्वोक्तप्रकारेणोदितां **दूतिगिरं** श्रुत्वा श्रीपतिः **अर्थी** अयं जनः **भद्रतरः**। अस्य जनस्य **वाणी** च **भद्रतमा**। **इति मुहुः अभिनन्द्य तस्याः** रुक्मिण्याः **मनीषितम्** अभीष्टम् **अतनोत्** सफलीचकार। तामुदवहदित्यर्थः। २१४

धूः राज्ञः पादे यस्याभक्तैर्नाप्यते निजैव नृपैः।
ते कन्यां तेन हृतां जिघृक्षवो युधि जिता न चित्रमिदम् ॥ २१५ ॥

**धूः राज्ञः पाद इति**। यस्य श्रीकृष्णस्य पादे अभक्तैः नृपैः निजैव स्वकीयैव राज्ञः धूः राज्ञः स्थानं नाप्यते, तेन श्रीकृष्णेन हृतां कन्यां रुक्मिणीं जिघृक्षवः ग्रहीतुमिच्छवो ये ते नृपाः जिता अभूवन्निति इदं न चित्रम्। २१५

गुरुर्वरदमुख्यस्य तस्य जाम्बवतीं सुताम्।
दत्वाभूज्जाम्बवान्यस्य स्वयं शिष्यः पुरा हरेः ॥ २१६ ॥

**गुरुर्वरदमुख्यस्येति**। **पुरा** पूर्वं श्रीरामावतारे स्वयं यस्य हरेः श्रीरामस्य शिष्यः अभूत्, तस्य श्रीकृष्णस्य हरेः अधुना जाम्बवतीं नाम सुतां दत्वा जाम्बवान् ऋक्षराजः वरदमुख्यस्य वरदानां यो मुख्यः श्रेष्ठः, तस्य श्रीकृष्णस्य गुरुः श्वशुरः अभूत्। २१६

मानदो निधिवरः प्रसेनतो यो मणिर्हरिवरं पुराप तम्।
तस्य सोदरकरे समर्पयंस्तत्सुतामलभतोत्तमो हरिः ॥ २१७ ॥

**मानदो निधिवर इति**। **मानदः**; बहुमानदः। **निधिवरः**; प्रतिदिनमष्टौ स्वर्णभारान् प्रयच्छन् निधिरिव भूतः यः मणिः; स्यमन्तको नाम मणिः **प्रसेनतः** तन्नाम्नो राज्ञः सकाशात् पुरा पूर्वं हरिवरं जाम्बवन्तं प्राप समागात्, तं मणिं **तस्य** प्रसेनस्य **सोदरकरे** सोदरस्य सत्राजितः करे समर्पयन् उत्तमः हरिः श्रीकृष्णः तत्सुतां सत्राजितः सुतां सत्यभामाम् अलभत। अत्रेयं पौराणिकी कथा—पूर्वं सत्राजिन्नाम कश्चन नृपः सूर्यस्य सखा अवर्तत। तस्मै सूर्यः संतोषेण स्यमन्तकं नाम मणिं प्रादात्। स च मणिः प्रत्यहमष्टौ

सुवर्णभारान् प्रदाय स्वस्य धारिणं पुरुषं दारिद्र्यादिरहितमकरोत् । तं मणिं कण्ठे धारयन् सत्राजित् कदाचित् द्वारकामाजगाम । तत्र श्रीकृष्णसत्राजितोः समागमे श्रीकृष्णेनार्थितोऽपि सत्राजित् तं मणिं तस्मै दातुं नैच्छत् । अथैकदा सत्राजितो भ्राता प्रसेनः तं मणिं कण्ठे बिभ्रत् हयमारुह्य मृगयां वने चचार । तत्र कश्चन सिंहः सहयं प्रसेनं हत्वा तं मणिमादाय जाम्बवताधिष्ठितां गिरिगुहां विवेश । जाम्बवांश्च मणिलोभेन तं सिंहं हत्वा मणिमादाय स्वबालकस्य क्रीडनकमकरोत् । वस्तुतत्त्वे एवं स्थिते, भ्रातुः प्रसेनस्य वनात् अप्रतिनिवर्तनं श्रुत्वा सत्राजित् 'कृष्णेन मम भ्राता प्रायो निहतो भवेत् । अत एव बहून् दिवसानतीत्यापि स न प्रतिनिवृत्तः । मण्याकाङ्क्षी च कृष्णः' इति कांचन किंवदन्तीं जनपदे उत्पादयामास । भगवान् श्रीकृष्णस्तु आत्मनो दुर्यशः अपमार्ष्टुकामः मण्यन्वेषणे प्रवृत्तः प्रसेनस्य पदवीं नागरैः सहान्वद्रवत् । तत्र च वने प्रसेनं सहयं सिंहेन हतं वीक्ष्य किंचिद् दूरं गत्वा तं च सिंहं केनचित् ऋक्षेण हतं दृष्ट्वा पौराणामदर्शयत् । ततोऽपि किंचिद् दूरं गत्वा किंचन भीमं बिलं वीक्ष्य तत्र स्वयमेकाकी प्रविवेश । तत्र बालकस्य क्रीडनकतया परिकल्पितं मणिं स्यमन्तकं वीक्ष्य तज्जिघृक्षया बालकान्तिकमुपजगाम । अत्रान्तरे विदितवृत्तान्तो जाम्बवानेत्य श्रीकृष्णेन सह अष्टाविंशतिं दिनानि द्वन्द्वयुद्धमकरोत् । एकोनत्रिंशे दिने श्रीकृष्णेन पराजितो जाम्बवान् तस्य पादयोर्निपत्य प्राणभिक्षां याचमानः श्रीकृष्णाय स्यमन्तकमणिना सह स्वसुतां जाम्बवतीं ददौ । ततः श्रीकृष्णः जाम्बवत्या स्यमन्तकेन च सह बिलान्निर्गत्य पौरान् विदिततत्त्वान् कृत्वा द्वारकायां सभामासीनः सत्राजितमाहूय पौराणां संनिधौ मणिं तस्मै प्रादात् । सत्राजित् मणेर्लाभेनातितरां प्रीतोऽपि पूर्वं स्वकृतात् मणिविषये श्रीकृष्णार्थनानिराकरणात् श्रीकृष्णविषयकापवादोत्पादनाच्च नितरां विलक्षः श्रीकृष्णं क्षमां प्रार्थयामास । स्वसुतां सत्यभामां स्यमन्तकं च श्रीकृष्णायादात् । श्रीकृष्णस्तु स्यमन्तकं तस्मै प्रतिप्रदाय सत्यभामां परं स्वीचकारेति । २१७

रङ्गेऽस्य श्रद्धा नो द्रुपदाहूतस्तथापि सह यदुभिः ।
पार्थहिताय प्रायात् सबलः कृष्णास्वयंवरं शौरिः ॥ २१८ ॥

रङ्गेऽस्य श्रद्धेति। अस्य श्रीकृष्णस्य रङ्गे युद्धरङ्गे श्रद्धा आस्था नासीत्। तथापि द्रुपदेनाहूतः सन् यदुभिः सह सबलः ससैन्यश्च सन् पार्थानां हितं कर्तुं शौरिः श्रीकृष्णः कृष्णायाः द्रौपद्याः स्वयंवरं प्रायात्। २१८

स्वभावो ज्ञानस्य स्वयमथ सुखस्यापि स हरि-
स्तया भूम्या चैतान् विधिवदभिसंयोज्य नगरे।
वसन्निन्द्रप्रस्थे मयकृतसभाशोभिनि वने
मृगान्निघ्नन्दृष्ट्वा स्त्रियमवददालोच्य विजयम्॥ २१९॥

स्वभावो ज्ञानस्येति। अथ स्वयं ज्ञानस्य सुखस्यापि स्वभावभूतः ज्ञानानन्दस्वरूप इत्यर्थः। स हरिः तया द्रौपद्या भूम्या च राज्येन च एतान् पार्थान् विधिवत् अभिसंयोज्य योजयित्वा मयकृतसभाशोभिनि मयेन निर्मितया सभया प्रकाशमाने इन्द्रप्रस्थे तन्नामके नगरे वसन् कदाचित् वने मृगान् निघ्नन् मृगयामटन्नित्यर्थः। स्त्रियं कांचन दृष्ट्वा स्वयं मनसि आलोच्य विजयम् अर्जुनम् अवदत्। २१९

अवस्थेयं नार्यास्तनुमनुपभुक्तां कथयति
स्मरारूढामस्या हृदयमवगच्छाखिलमिति।
स गत्वापृच्छत्तामकथयदसौ भास्करसुता
वसाम्यस्यां नद्यां हरिमभिलषन्ती पतिमहम्॥ २२०॥

अवस्थेयं नार्या इति। अस्या नार्याः इयमवस्था तनुं तस्याः वपुः अनुपभुक्तां स्मरारूढां च कथयति। अस्याः हृदयम् अखिलं संपूर्णं यथा तथा अवगच्छ जानीहि। इति विजयमवददिति पूर्वेणान्वयः। स अर्जुनश्च गत्वा तस्याः समीपं प्राप्य ताम् अपृच्छत्। असौ स्त्री अहं भास्करसुता सूर्यस्य दुहिता हरिं श्रीकृष्णं पतिमभिलषन्ती अस्यां नद्यां वसामीति अकथयत्। २२०

पुत्रो ज्ञानाढ्योऽयं देवक्या हरिरिहागतः सख्या।
इति मत्वा कालिन्दी नाम्ना प्राप्तास्मि देवमधुनेति॥ २२१॥

पुत्रो ज्ञानाढ्योऽयमिति । अयं ज्ञानाढ्यः ज्ञानसंपूर्णः । ज्ञानपदं शक्त्यादीनामितरेषामपि गुणानामुपलक्षणम् ।

"ज्ञानशक्तिबलैश्वर्यवीर्यतेजांस्यशेषतः ।
भगवच्छब्दवाच्यानि विना हेयैर्गुणादिभिः ॥"

इति हि मुनिवचनम् । हरिः देवक्याः पुत्रः सन् सख्या समानख्यानवता समानज्ञानादिगुणेन बलभद्रेण सह इह धरातले आगतः अवतीर्णः । देवकीपुत्रभावेनावतारेऽपि तस्य भगवतः ज्ञानशक्त्यादयो गुणाः न परिहीयन्ते इति भावः । गीतं च भगवतैव—

"अजोऽपि सन्नव्ययात्मा भूतानामीश्वरोऽपि सन् ।
प्रकृतिं स्वामधिष्ठाय संभवाम्यात्ममायया ॥"

इति । तत्र हि—अहम् अजः सन्नेव ज्ञानशक्त्यादिभिरप्रच्युतात्मा सन्नेव भूतानामीश्वरः सन्नेव चात्ममायया आत्मनः संकल्पेन संभवामि रामकृष्णादिरूपेणावतरामीत्यर्थो विवक्षितः । इति तदवतारं ज्ञात्वा अहं कालिन्दी नाम्ना देवं श्रीकृष्णम् अधुना प्राप्तास्मि । २२१

**धवः श्रेयः पथ्यं प्रदिशति वधूभ्यो लघुरपि**
**प्रभुस्तुभ्यं भद्रे वितरति हि निःश्रेयसमपि ।**
**प्रशस्यैवं विष्णुर्गदितमनयाचष्ट हरये**
**स तामादायागान्नरपतिरथ स्वां च नगरीम् ॥ २२२ ॥**

**धवः श्रेयः पथ्यमिति** । लोके लघुरपि पामरोऽपि धवः पतिः पुरुषः वधूभ्यः कान्ताभ्यः श्रेयः पथ्यं च प्रदिशति । हे भद्रे कल्याणि, प्रभुः सर्वेश्वरः श्रीकृष्णः तुभ्यं निःश्रेयसमपि वितरति; न केवलमैहलौकिकं भोगं, किंतु मोक्षमपि ददाति । एवम् उक्तप्रकारेण जिष्णुः अर्जुनः तां प्रशस्य अनया यत् गदितं तत् हरये श्रीकृष्णाय आचष्ट अवदत् । सः नरपतिः; भगवान् श्रीकृष्णः । ताम्; कालिन्दीम् । आदाय स्वां नगरीम् अगात् । २२२

तेन शरैः पटुनारीन् जित्वावन्त्या तु मित्रविन्दाप्ता ।
वृषवरनियमनलब्धा कौसल्या चारिमध्यतः सत्या ॥ २२३ ॥

**तेन शरैः पटुनेति** । पटुना समर्थेन तेन श्रीकृष्णेन अरातीन् प्रत्यर्थिनो नृपान् जित्वा आवन्त्या अवन्तीराजदुहिता मित्रविन्दा नाम कन्या आप्ता । **वृषवरनियमनलब्धा**; दुर्दान्तानां वृषभवराणां नियमनरूपेण पणेन लब्धा सत्या नाम कौसल्या कोसलराजदुहिता च **अरिमध्यतः** अरीणां प्रत्यर्थिनां मध्यात् आप्ता । २२३

वश्योऽसौ भक्तानां भूपान् कृष्णो विरोधिनो हत्वा ।
उपयेमे कैकेयीं भद्रां वपुषा च नाम्ना च ॥ २२४ ॥

**वश्योऽसौ भक्तानामिति** । भक्तानां वश्यः वशं गतः असौ श्रीकृष्णः विरोधिनो भूपान् हत्वा कैकेयीं केकयराजदुहितरं **वपुषा नाम्ना च भद्राम्**; मङ्गल्यवपुःसौन्दर्यवतीं भद्रां नाम कान्ताम् उपयेमे उदवहत् । २२४

हयो धन्यो यो यो रथनरगजाश्चैतदखिलं
सुतां चोच्चैर्लक्ष्ये जलसमधिगम्ये विदलिते ।
अदान्मद्रेशोऽस्मै तदनु मुरभौमाद्यरिगणान्
सुरार्थे हत्वासावुदवहदमेया नृपसुताः ॥ २२५ ॥

**हयो धन्य इति** । जले समधिगम्ये प्रतिबिम्बतया संलक्ष्ये उच्चैः ऊर्ध्वदेशस्थे लक्ष्ये शरव्ये विदलिते सति श्रीकृष्णेनेति शेषः । यः यः धन्यः अनर्घः हयः, रथाश्च नराश्च गजाश्च । धन्या इत्यत्रापि संबध्यते । एतदखिलं सुतां च लक्ष्मणाख्यामस्मै मद्रेशः मद्रदेशाधिपः अदात् । तदनु असौ श्रीकृष्णः **सुरार्थे**; देवानामर्थे प्रयोजनाय, सुरान् परिरक्षितुमित्यर्थः; **मुरभौमाद्यरिगणान्** मुरनरकाद्यसुरगणान् हत्वा **अमेयाः** अपरिमिताः नृपसुताः उदवहत् उपयेमे । २२५

अप्रियोऽनयेन यः शिवस्य दग्धदेहवां-
स्तत्प्रसादतो हरिस्तमात्मनोंऽशमात्मना ।
भावयन् हराचलं ययौ पिशाचकोऽन्तरा
भक्तितो द्विजामिषं ददन्ननाम तम् ॥ २२६ ॥

**अप्रियोऽनयेनेति** । यः कामः अनयेन तपोभङ्गरूपेणाविनयेन **शिवस्य अप्रियः** सन् **दग्धदेहवान्** अभूत् तं कामं तत्प्रसादतः शिवस्य प्रसादात् **आत्मनः अंशं** तनयम् **आत्मना** मनसा **चिन्तयन् हरिः** श्रीकृष्णः **हराचलं** कैलासं **ययौ** । **अन्तरा** मध्येमार्गे **पिशाचकः** कश्चन पिशाचः **द्विजामिषं** द्विजमांसं भक्त्या ददत् तं श्रीकृष्णं ननाम । २२६

शास्त्रबाह्योऽयमर्थो यन्नृमांसादनमित्यमुम् ।
जीवयन् द्विजमस्मै च ज्ञानं दत्वा ययौ हरिः ॥ २२७ ॥

**शास्त्रबाह्योऽयमिति** । **नृमांसादनं** मनुष्यमांसभक्षणमिति यत् **अयमर्थः शास्त्रबाह्यः** शास्त्रनिषिद्धः इति वदन् **हरिः** श्रीकृष्णः **अमुं** पिशाचहतं **द्विजं जीवयन् अस्मै** पिशाचाय **ज्ञानं** दिव्यज्ञानं **दत्वा ययौ** कैलासं जगाम । २२७

भोगमात्रस्य दातासौ पुत्रभोगेप्सयात्मनः ।
अर्धमर्धेन देहस्य व्रतिनातोषयत्प्रभुः ॥ २२८ ॥

**भोगमात्रस्य दातेति** । **भोगमात्रस्य** सर्वस्यापि ब्रह्मानन्दानुभवपर्यन्तस्य भोगस्य ऐहलौकिकस्यामुष्मिकस्य च **दाता असौ प्रभुः** श्रीकृष्णः **आत्मनः पुत्रभोगेप्सया** पुत्रलाभजन्यभोगं प्राप्तुमनाः **व्रतिना** व्रतवता **देहस्यार्धेन** अर्धभागेन श्रीकृष्णरूपेण **अर्धम्** अन्यमर्धभागं हररूपम् **अतोषयत्** । २२८

ग्रामार्थी नरसुरनाथ सद्गुणानां प्रद्युम्नस्तव तनुजो भवेत्समानः ।
इत्युक्त्वा दृढमुपगुह्य शंकरस्तं प्रस्थाप्य स्वपुरमगात्स्वयं च धाम ॥

ग्रामार्थीति। हे नरसुरनाथ, सद्गुणानां ग्रामार्थी समूहार्थी तव समानः सदृशः प्रद्युम्नो नाम तनुजो भवेत्। इति उक्त्वा शंकरः तं श्रीकृष्णं दृढं यथा तथा उपगुह्य स्वपुरं प्रस्थाप्य च स्वयं च धाम स्थानम् अगात्। २२९

यत्रान्नं श्रेष्ठं यच्चित्रतमं तत्र मां निवेश्य गृहे।
स्वयमपि तत्रैवेति प्रीतिं यान्ति स्म हरिदाराः॥ २३०॥

यत्रान्नं श्रेष्ठमिति। यत्र गृहे श्रेष्ठम् अन्नं भोगसाधनं विद्यते। यच्च गृहं चित्रतमम् अतिशयेनाश्चर्यावहं तत्र गृहे मां निवेश्य स्वयमपि तत्रैव गृहे हरिः मया सह भोगाननुभवन् वसति। इति हरिदाराः श्रीकृष्णमहिष्यः प्रत्येकं प्रीतिं यान्ति स्म। २३०

भिन्नाङ्गो नागारिध्वजादभिन्नो गुणैस्तु रुक्मिण्याम्।
मदनोऽजनि तं भार्या रिपुजलधिझषोदरक्रमाल्लेभे॥ २३१॥

भिन्नाङ्गो नागारीति। भिन्नाङ्गः देहमात्रेण विभिन्नः। गुणैस्तु ज्ञानशक्त्यादिगुणैस्तु नागारिध्वजात् गरुडध्वजात् अभिन्नः तत्सदृशः मदनः कामः रुक्मिण्यां श्रीकृष्णमहिष्यां प्रद्युम्ननाम्ना पुत्ररूपः अजनि संजातः। तं प्रद्युम्नं भार्या मायावतीनाम्ना शम्बरस्य गृहेऽवतीर्णा रतिः, रिपुजलधिझषोदरक्रमात् प्रथमं शत्रुणा शम्बरासुरेणापहृतः, अनन्तरं जलधौ पातितः, ततो झषेण निगीर्णः, ततो मत्स्यखण्डने सति बहिरागत इति क्रमात् लेभे पतित्वेन आप। अत्रेयं पौराणिकी कथा—रुद्रमन्युदग्धो मन्मथः रुक्मिण्यां प्रद्युम्ननाम्ना जनिमलभत। तं च सूतिकागेहात् शम्बरः अपहृत्य जलधौ प्रचिक्षेप। ततो मत्स्यः कश्चन तं शिशुं जग्रसे। एकदा धीवराः मत्स्यमेतं विशेषतो भासमानवपुषं गृहीत्वा यदा न्यकृन्तन् तदा निरतिशयसौन्दर्यं शिशुं तदुदरे वीक्ष्य विस्मिताः शम्बरगृहवासिन्यै मायावत्यै ददुः। मायावती तं परिपोषयन्ती समारूढयौवनं तं कामयमाना पतिमलभतेति। २३१

प्रज्ञातो योगीशः शम्बरहन्तैष ते पतिः कार्ष्णिः।
इति शम्बरमठिनीं तां स्माह तयोक्तोऽवधीत्स तं काले॥ २३२॥

प्रज्ञातो योगीश इति। कार्ष्णिः श्रीकृष्णस्यात्मजः एष ते पतिः प्रद्युम्नः शम्बरहन्ता इति प्रज्ञातः विदितचरः योगीशः शम्बरमठिनीं शम्बरस्य मठे नियुक्तां तां मायावतीम् आह स्म अवदत्। तया मायावत्या भार्यया उक्तः सः प्रद्युम्नः तं शम्बरं काले उचिते समये अवधीत्। २३२

मुख्यो धीरो लीनः पुत्राणामिति भृशातुरां जननीम्।
प्राप च रत्या नीतः सोऽप्यागान्नारदो मुनिर्घटयन्॥ २३३॥

मुख्यो धीर इति। धीरः मे पुत्राणां मुख्यः लीनः कुत्रापि अदृश्योऽभवत् इति भृशातुरां भृशं पीडितां जननीं रुक्मिणीं रत्या भार्यया मायावत्या नीतः मायाबलादाकाशमार्गेण प्रापितः सन् प्राप। सः प्रसिद्धः नारदो मुनिरपि घटयन् अतीतवृत्तान्तावेदनेन तान् परस्परं संघटयन् आगात् आजगाम। २३३

गावः प्रिया वः किमु रुक्ममेवं यच्छन्तमिच्छाविषयं नराणाम्।
ततान कृष्णः पृथुकैकमुष्टिं गृह्णन् कुचेलं गुरुगेहबन्धुम्॥ २३४॥

गावः प्रिया व इति। श्रीकृष्णः गुरुगेहबन्धुं बहुबन्धुयुतं महाकुटुम्बिनमित्यर्थः। कुचेलं मलिनजीर्णवस्त्रधरणेन कुचेल इति प्रसिद्धिं गतं सुदामनामानं दरिद्रं विप्रं तस्मात् पृथुकैकमुष्टिं धानामुष्टिमेकां गृह्णन् स्वीकुर्वन् तं महाधनिनं ततान। तदेवाह—वः प्रतिग्रहार्थमागतानां युष्माकं किं गावः प्रियाः? अथवा रुक्मं सुवर्णं प्रियम्? इत्यापृच्छ्य नराणां याचनया आगतानाम् इच्छाविषयं यच्छन्तं ददतं ततानेति संबन्धः। २३४

सुरतं स्त्रीभिः स्वप्ने दृष्टस्याप्यर्थ्यते भृशं यस्य।
अनिरुद्धं तं लेभे कार्ष्णिर्वज्राह्वयं स यदुसिंहम्॥ २३५॥

सुरतं स्त्रीभिरिति। स्वप्ने दृष्टस्यापि यस्य यूनः सुरतं स्त्रीभिः भृशम् अत्यन्तम् अर्थ्यते तम् अनिरुद्धं नाम तनयं कार्ष्णिः प्रद्युम्नः लेभे। सः अनिरुद्धश्च यदुसिंहं वज्राह्वयं तनयं लेभे। २३५

त्रिराज्ञाङ्कुशवश्यानि हरेः सप्त शतानि च ।
त्रिपञ्चाशत्सहस्राणि चासन्नात्मजदन्तिनाम् ॥ २३६ ॥

त्रिराज्ञाङ्कुशेत्यादि । हरेः श्रीकृष्णस्य अत्मजदन्तिनाम् आत्मजाः तनयाः दन्तिन इव, तेषाम् । आज्ञाङ्कुशवश्यानि; आज्ञैवाङ्कुशः तस्य वश्यानि परमविधेयानीत्यर्थः । त्रिः त्रिभिरावृत्तानि सप्त शतानि, त्रिपञ्चाशत्सहस्राणि चासन् । २३६

धाराभिः श्रममिव तोयदः प्रजानां
रामोऽथ व्रजसुहृदां मनोरथैः स्वैः ।
कारुण्यादशमयदार्तिमेत्य घोषं
कालिन्द्या सभयसभाजितः स्रगाद्यैः ॥ २३७ ॥

धाराभिः श्रममिति । अथ रामः बलरामः घोषं गोकुलम् एत्य कालिन्द्या यमुनया स्रगाद्यैः पुष्पमाल्याद्यैः सभयं यथा तथा सभाजितः पूजितः सन् तोयदः धाराभिः जलवर्षैः प्रजानां श्रममिव आतपजन्यं श्रममिव व्रजस्थानां गोपानां गोपीनां च आर्तिं कष्टं कारुण्यात् स्वैः मनोरथैः परिपूरितैः अशमयत् । तेषां मनोरथान् पूरयामासेत्यर्थः । २३७

त्रिभिर्हानिस्ते स्यादरिदरकृपाणैः समुचितो-
ऽस्म्यहं यद्येतेषां मम यदि भवान् पौण्ड्रकनृपः ।
इति प्रोचे कृष्णं स्वयमथ हरेश्चक्रमचिरात्
परस्याविश्यान्तस्त्रुटितमतनोत्संशयमिमम् ॥ २३८ ॥

त्रिभिर्हानिस्त इति । अथ पौण्ड्रकनृपः पौण्ड्रकनामा करूशाधिपतिः हे कृष्ण, ते अरिदरकृपाणैः चक्रशङ्खनन्दकैरायुधैः त्रिभिः हानिः विरहः स्यात् । त्वमेतान् परित्यजेत्यर्थः । अहं यदि एतेषाम् आयुधानां समुचितोऽस्मि; भवांश्च यदि मम मदधीनः, तदा एतान् परित्यजेति पूर्वेणान्वयः । अत्र

यदीति 'वेदाश्चेत्प्रमाणम्' इतिवत् असंदिग्धे संदिग्धवचनम्। एतेषामहमेव समुचितः, भवांश्च मदधीन एवेत्यर्थः। इति श्रीकृष्णं प्रति स्वयं प्रोचे। अथ हरेश्चक्रं सुदर्शनम् अचिरादेव परस्य शत्रोः पौण्ड्रकस्य अन्तः हृदयं प्रविश्य इमं संशयम् असंदिग्धत्वाभिप्रायेण तेनोक्तमपि संदिग्धमेव वस्तुत इति तं संशयं त्रुटितं छिन्नम् अतनोत्। भगवान् श्रीकृष्ण एवैतेषां समुचितः। स च न त्वदधीन इति निश्चयमुत्पादयामासेत्यर्थः। २३८

अनङ्गाश्रिततां हित्वा शर्वमाराध्य तत्सुतः।
कृत्यां कृष्णं नयन् दग्धस्तयासौ चक्रभीतया ॥ २३९ ॥

अनङ्गाश्रिततामिति। तत्सुतः; पौण्ड्रकसुतः। काशीपतिसुत इति तु श्रीभागवतम्। अनङ्गाश्रिततां कामपरवशतां हित्वा शर्वं रुद्रमाराध्य कृत्यां ज्वलनमयीं कृष्णं नयन् चक्रभीतया सुदर्शनात् भीतया तया कृत्यया असौ कृत्यानियोक्ता तत्सुत एव दग्धः अभूत्। २३९

धन्यः स नाथोऽस्तु तवानिरुद्धः स्वप्नोपलब्धस्तमिहानयामि।
इत्यात्तनिद्रं वियतानयत्तं बाणस्य पुत्रीमथ चित्रलेखा ॥ २४० ॥

धन्यः स नाथ इति। अथ चित्रलेखा नाम उषायाः सखी हे सखि, यः स्वप्नोपलब्धः त्वया स्वप्ने दृष्टः सः धन्यः अनिरुद्धः प्रद्युम्नपुत्रः तव नाथः भर्ता अस्तु। तम् अनिरुद्धम् इह प्रदेशे आनयामि। इत्युक्त्वा आत्तनिद्रं प्राप्तनिद्रमेव तम् अनिरुद्धम् वियता आकाशमार्गेण बाणस्य पुत्रीम् उषाम् अनयत्। २४०

तिलस्य रसवत्सोऽपि दीपिकामिव तां प्रियाम्।
जीवयन्नवसद्गूढो मूढैर्बद्धश्च शत्रुभिः ॥ २४१ ॥

तिलस्य रसवदिति। सोऽपि अनिरुद्धोऽपि तिलस्य रसवत् तिले तैलमिव गूढः सन् दीपिकामिव तां प्रियाम् उषां जीवयन् तैलं दीपिकामिव संजीवयन् अवसत्। मूढैः शत्रुभिः बद्धश्च। २४१

तव मानदाद्य युधि बाणबाहुभिर्विजितस्तनूज इति नारदेरितम् ।
वचनं निशम्य हरिसीरिमन्मथा ययुरेव शोणितपुरं परंतपाः ॥२४२॥

तव मानदेति । मानद प्रद्युम्न, अद्य तव तनूजः अनिरुद्धः युधि बाणबाहुभिः विजितः इति नारदेनेरितं वचनं निशम्य श्रुत्वा परंतपाः शत्रुसंहारिणः हरिसीरिमन्मथाः श्रीकृष्णबलरामप्रद्युम्नाः शोणितपुरं बाणासुरनगरं ययुः । २४२

षड्विधं पदमस्योच्चैः सालैः सैन्यं चतुर्विधम् ।
भुजांश्च भङ्क्त्वा तार्क्ष्योढास्तेऽगच्छन् सवधूवराः ॥ २४३ ॥

षड्विधं पदमिति । अस्य धन्वमहीनरवृक्षजलगिरिरूपं दुर्गं, चतुर्विधं रथगजतुरगपदातिरूपं सैन्यं भुजांश्च सहस्रसंख्याकान् भङ्क्त्वा तार्क्ष्येण गरुडेनोढाः ते हरिहरमन्मथा सवधूवराः उषया अनिरुद्धेन च सहिता अगच्छन् द्वारकां जग्मुः । २४३

मङ्गलं नीडमात्मीयमगात्तार्क्ष्योऽप्यनुज्ञया ।
साम्बोऽथ बद्धः कुरुभिर्दुर्योधनसुतां हरन् ॥ २४४ ॥

मङ्गलं नीडमिति । तार्क्ष्यः गरुडोऽपि अनुज्ञया श्रीकृष्णानुज्ञया मङ्गलं मङ्गलकरम् आत्मीयं नीडं स्वकीयमावासस्थानम् अगात् । अथैकदा दुर्योधनसुतां लक्ष्मणाख्यां स्वयंवरोद्यतां साम्बः श्रीकृष्णस्य जाम्बवत्यामुत्पन्नः पुत्रः हरन् बलादपहरन् कुपितैः कुरुभिः दुर्योधनादिभिः बद्धः निगलितः अभूत । २४४

योग्यं संयुद्धमास्तां स प्रक्षेप्तुं सपुरं जनम् ।
जाह्नव्यामिति सीरेण विचकर्ष पुरं बलः ॥ २४५ ॥

योग्यं संयुद्धमिति । सः बलः बलरामः एभिः सह संयुद्धम् आस्ताम्; दूरे तिष्ठतु । सपुरं हास्तिनपुरेण सह जनं तत्रत्यं कौरवजनं सर्वं जाह्नव्यां प्रक्षेप्तुं योग्यमिति निश्चित्य सीरेण हलेन पुरं हास्तिनं चकर्ष । २४५

यो गोज्ञानी तस्यैवास्त्यक्ष्णा नेक्ष्यते भवत्तत्त्वम् ।
अद्य तु जानीमस्त्वामिति दत्वा दंपती नृपा नेमुः ॥ २४६ ॥

**यो गोज्ञानी तस्येति** । यः पुरुषः गोज्ञानी वेदवित्, तस्यैव अस्ति, भवत्तत्त्वज्ञानमिति शेषः; "नावेदविन्मनुते तं बृहन्तम्" इति श्रुतेः। भवत्तत्त्वम् अक्ष्णा नेक्ष्यते; "न संदृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चनैनम्" इति श्रुतेः । अद्य त्वां यथावस्थितं जानीमः। इति वदन्तो नृपाः कौरवाः दंपती लक्ष्मणासाम्बौ तस्मै दत्वा नेमुः प्रणेमुः । २४६

शैलालयो नम्यतमं कपीन्द्रो वृक्षैर्बलं रैवतकप्रसूतैः ।
विव्याध सोऽमून् मुसलेन हत्वा भौमप्रियं तं द्विविदं ममर्द ॥२४७॥

**शैलालयो नम्यतममिति** । शैलालयः पर्वतनिवासी यः द्विविदो नाम कपीन्द्रः वानरश्रेष्ठः नम्यतमं बलं बलरामं रैवतकप्रसूतैः रैवतकाख्यपर्वतोत्पन्नैः वृक्षैः विव्याध, तं भौमप्रियं नरकासुरसुहृदं द्विविदं सः बलरामः अमून् स्वस्योपरि पातितान् वृक्षान् मुसलेन हत्वा ममर्द । २४७

मन्त्रितं प्राज्ञाय नृपैर्दातुं चैद्यो महार्हणम् ।
न सेहे राजसूये तं चैद्यं चक्रं च नो हरेः ॥ २४८ ॥

**मन्त्रितं प्राज्ञायेति** । प्राज्ञाय "चेतनश्चेतनानाम्" "अयं पुरुषः प्राज्ञेनात्मना संपरिष्वक्तः" इत्यादिषु प्रतिपादिताय परमात्मने श्रीकृष्णाय राजसूये यागे दातुं नृपैः युधिष्ठिरादिभिः मन्त्रितम् आलोच्य निर्णीतं महार्हणं महत् संमाननं चैद्यः शिशुपालः न सेहे न मर्षयामास । हरेः श्रीकृष्णस्य चक्रं सुदर्शनं च तं चैद्यं नो सेहे जीवन्तं न मर्षयामास; तमवधीदित्यर्थः । २४८

अनिधानं कवेर्यस्य न ध्वजाग्रं धराभरम् ।
हर्तुं तेनात्र कल्यंशे हरिर्बीजमयोजयत् ॥ २४९ ॥

अनिधानं कवेर्यस्येति । यस्य कवेः श्रीकृष्णस्य ध्वजाग्रं धराभरं हर्तुं नानिधानं, स हरिः तेन कारणेन अत्र कल्यंशे कलहे बीजमयोजयत् । यदूनां परस्परं कलहं संकल्पयन् तत्कारणतया मुनिशापं प्रवर्तयामासेत्यर्थः । २४९

श्रोत्रियप्रियस्य तस्य चैद्यभङ्गकोपिताः
साल्वदन्तवक्त्रकौ विडूरथश्च मारिताः ।
पाण्डवानथो हरिः प्रकाशगान् प्रपद्य तैः
क्षीणवेदनां व्यधाद्भुवं स पार्थसारथिः ॥ २९० ॥

श्रोत्रियप्रियस्येति । श्रोत्रियप्रियस्य श्रोत्रियाणां साङ्गवेदाध्येतॄणां महात्मनां प्रियस्य तस्य श्रीकृष्णस्य चैद्यभङ्गकोपिताः शिशुपालस्य वधेन संजातकोपाः साल्वः दन्तवक्त्रः विडूरथः इत्येते मारिताः । अथो अनन्तरं हरिः श्रीकृष्णः प्रकाशगान् अज्ञातवनवासात् प्रतिनिवृत्य सर्वजनानां प्रत्यक्ष-गोचरतामापन्नान् पाण्डवान् प्रपद्य प्राप्य तैः करणभूतैः स पार्थसारथिः भुवं क्षीणवेदनां व्यधात् । पाण्डवानां कुरूणां च युद्धं प्रवर्त्य तत्रससैन्यानां सबान्धवानां च कुरूणां नाशं पाण्डवैरकारयदित्यर्थः । अनेन कुरूणां संहारे भगवान् श्रीकृष्ण एव प्रधानकर्ता, पाण्डवास्तु उपकरणभूता इत्युक्तं भवति । "मयैवैते निहताः पूर्वमेव निमित्तमात्रं भव सव्यसाचिन्" इति ह्यगायि भगवता । २९०

मङ्गलं परममात्मनि रामो भावयन्निव परीत्य धरित्रीम् ।
यानि तीर्थजजलानि धरित्र्यां तानि मङ्गलतराणि वितेने ॥२९१॥

मङ्गलं परममिति । रामः बलरामः धरित्रीं परीत्य परितो गत्वा तेन आत्मनि परमं निरतिशयं मङ्गलं भावयन्निव उत्पादयितुमिव धरित्र्यां यानि तीर्थजजलानि तानि सर्वाणि मङ्गलतराणि वितेने स्वस्याभिषेकेण पुण्यतराणि चकार । तीर्थाटनमकरोदित्यर्थः । २९१

कवेः शक्यं त्रातुं तव परमिमं वल्वलभयात्
क्रतुं राम स्वामिन्निति तमृषयो नैमिशगताः ।
प्रणेमुः स्मृत्वासौ हलमुसलमाभ्यां तमवधी-
दथो कृष्णः पुर्यां स च हलधरः स्वैरमवसत् ॥ २९२ ॥

**कवेः शक्यं त्रातुमिति** । हे स्वामिन् राम बलभद्र, कवेः सर्वज्ञस्य **तव परं** तवैव इमं क्रतुम् अस्माभिरारब्धं यज्ञं वल्वलभयात् वल्वलनाम्नः इल्वलपुत्रात् असुरात् भयात् त्रातुं गोपायितुं शक्यम् । इमं यज्ञं रक्षितुं त्वमेव प्रभवसीत्यर्थः । इति वदन्तः नैमिशारण्यगताः ऋषयः तं बलरामं प्रणेमुः । **असौ** बलरामः स्वकीयं हलं मुसलं च स्मृत्वा तदैव संनिधिमुपगताभ्यां ताभ्यामायुधाभ्यां तं वल्वलम् अवधीत् । अथो कृष्णः स हलधरश्च पुर्यां द्वारकायां स्वैरमवसत् । २९२

भवेत्सुखं परमपरं धनं तपः सुपुत्रता विशदतरा मतिर्यशः ।
यया नृणां भगवति भक्तिमाशु तामिदं पठन् हरिचरितं समश्नुते ॥

इति हरिचरितं समाप्तम् ।

**भवेत्सुखमिति** । यया भगवद्भक्त्या नृणां परं निरतिशयोत्कृष्टं सुखं, मोक्षसुखमित्यर्थः, **अपरं** किंच धनं, तपः, सुपुत्रता, विशदतरा निर्मला मतिः, विशदतरं यशश्च भवेत्, तां तादृशीं भगवति श्रीकृष्णे भक्तिम् इदं हरिचरितं तदाख्यं काव्यं पठन् पुरुषः आशु समश्नुते प्राप्नोति ।

अत्र,

शरीरारोग्यमैश्वर्यं भोगांश्चैवानुषङ्गिकान् ।
ददाति ध्यायिनां पुंसामपवर्गप्रदो हरिः ॥

इति वचनमनुसंधेयम् । २९३

हरिचरितमनर्घपद्यहृद्यं व्यवृणुत कृष्णसुधीः सुधीविधेयः ।
हरिरघहरणो दयोदयेद्धो मुदितमना मुदमादधात्वमन्दाम् ॥

इति हरिचरितव्याख्यानं संपूर्णम् ।

# पद्यानुक्रमः

## INDEX OF METRES

In the case of *Āryā*, all the *Mātrāvṛttas* are included in this category.



The metre of the verse 84 is not traced. Its scheme is :

⏑⏑⏑ – – ⏑ – ⏑⏑ ⏑ – – ⏑ –

न त भ य ल ग

—Total 1.

# वाक्यसूची

THE three columns indicate the *Rās'i*, the *Tithi* (30th part of a *Rās'i*) and *Aṁs'a* (sixtieth part of a *Tithi*); this last is called *Ili* in Malabar.

When there is no number to indicate *Rās'i* in the *Vākya*, the zero is put within brackets.

When the *Pratīka* of the verses noted in the beginning of the commentary of each verse is not a full *Vākya*, it is indicated by an asterisk at the end of the *Vākya*.

When the same *Vākya* is represented by two verses, it is indicated by two asterisks before the *Vākya*.

| | | |
|---|---|---|
| 1 | गीर्न: श्रेय: | (0)-12-03 |
| | धेनव: श्री: | (0)-24-09 |
| | रुद्रस्तु नम्य: | 1-06-22 |
| | भवो हि याज्य: | 1-18-44 |
| | धन्येयं नारी* | 2-01-19 |
| | धनवान् पुत्र: | 2-14-09 |
| | गृह्या: सुरा राज्ञा* | 02-27-13 |
| | बालेन कुलम् | 3-10-33 |
| | धनुर्भि: खलै: | 3-24-09 |
| | दश सूनव: | 4-07-58 |
| 11 | होमस्य स्रुव: | 4-21-58 |
| | दीनास्ते नृणाम् | 5-06-08 |
| | मुखं नारीणाम् | 5-20-25 |
| | भवभग्नास्ते | 6-04-44 |
| | श्रीर्निधीयते | 6-19-02 |
| | शं किल नाथ: | 7-03-15 |
| | श्रेष्ठा सा कथा | 7-17-22 |
| | सौख्यस्यानन्द: | 8-01-17 |
| | ध्यानं मान्यं हि* | 8-15-01 |
| | धीरो हि राजा | 8-28-29 |
| 21 | श्रुत्वास्य युद्धम् | 9-11-42 |
| | अभवच्छ्राद्धम् | 9-24-40 |
| | गोरसो ननु स्यात्* | 10-07-23 |
| | द्रुमा धन्या न ये* | 10-19-52 |
| | इष्टं राज्ञ: कुर्यात् | 11-02-10 |
| | धन्या विधेयं स्यात् | 11-14-19 |
| | **त्वं रक्षा राज्यस्य | 11-26-24 |
| | **क्षेत्रज:* | (0)-8-26 |

| | | | | | |
|---|---|---|---|---|---|
| | **नीले नेत्रे | (0)-20-30 | | कुलगुरु: स्यात् | 1-23-31 |
| | जलं प्राशाय* | 1-02-38 | | मुनिस्त उग्रः | 2-06-05 |
| 31 | शशी वन्द्यः स्यात् | 1-14-55 | 61 | प्रमोदकर: | 2-18-52 |
| | गोरसप्रिय: | 1-27-23 | | शशाङ्कानुगः* | 3-01-55 |
| | वनानि यत्र | 2-10-04 | | वक्ष्यामि कालम् | 3-15-14 |
| | अन्नं गोत्रश्री:* | 2-23-00 | | संभेद: खलैः | 3-28-47 |
| | रुष्टास्ते नागा: | 3-06-12 | | शीलप्रियस्त्वम्* | 4-12-35 |
| | धिगन्ध: किल | 3-19-39 | | वेलातरव: | 4-26-34 |
| | पुरोगा अमी:* | 4-03-21 | | विभिन्नं कर्म | 5-10-44 |
| | मान्यः स कविः | 4-17-15 | | धर्मवान् राम: | 5-24-59 |
| | अरिष्टनाशम् | 5-01-20 | | दिग्व्यालो नास्ति* | 6-09-18 |
| | बालो मे केश: | 5-15-33 | | ते बाला भ्रान्ता: | 6-23-36 |
| 41 | कुशधारिण: | 5-29-51 | 71 | कामासन्न: सः* | 7-07-51 |
| | दृष्टिर्विद्यते | 6-14-10 | | होमं पुत्रार्थम् | 7-21-58 |
| | **स राजा प्रीतः | 6-28-27 | | मणिर्मानदः | 8-05-55 |
| | सुगुप्रायोऽसौ | 7-12-37 | | नाविद्धः पादे | 8-19-40 |
| | धिगस्तु हास: | 7-26-39 | | उल्पलं निधिः | 9-03-10 |
| | अङ्गानि यदा | 8-10-30 | | शूद्रस्तु योद्धा | 9-16-25 |
| | सेनावान् राजा | 8-24-07 | | विरुद्धं स्त्रीधनम् | 09-29-24 |
| | धीरा: सन्नद्धाः | 9-07-29 | | हीनप्रायो नट:* | 10-12-08 |
| | शालीनं प्रधानम् | 09-20-35 | | धिगश्व: खिन्नोऽयम् | 10-24-39 |
| | क्षीरं गोर्नो नयेत् | 10-03-26 | | दिशतु न: पथ्यम् | 11-06-58 |
| 51 | रत्नचयो नृप:* | 10-16-02 | 81 | जनोऽन्धः पापक:* | 11-19-08 |
| | ताः प्रजा: प्राज्ञा: स्यु: | 10-28-26 | | गृह्या स्यात् | (0)-1-13 |
| | अश्वानां को योग्य: | 11-10-40 | | मान्यं लोके* | (0)-13-15 |
| | तद्वैरं प्रियाया: | 11-22-46 | | धन्य: शरैः | (0)-25-19 |
| | धवत्वम् | (0)-4-49 | | सुखी स नित्यम् | 1-07-27 |
| | ग्रामस्तस्य | (0)-16-52 | | लाभो धान्यस्य | 1-19-43 |
| | जन्मजरा | (0)-28-58 | | अङ्कुरं नीरे* | 2-02-10 |
| | इष्टका कार्या | 1-11-10 | | धावद्वैद्योऽत्र* | 2-14-49 |

| | | | | | |
|---|---|---|---|---|---|
| | गत्वा सुराष्ट्रम् | 2-27-43 | | ताराङ्कं नभः* | 4-03-26 |
| | गमनकालम् | 3-10-53 | | प्रियार्थं कविः | 4-17-12 |
| 91 | दयावान् रोगी* | 3-24-18 | 121 | पापोऽयं निशि | 5-01-11 |
| | होमस्थानं वनम् | 04-07-58 | | धन्यो मान्योंऽशे* | 5-15-19 |
| | श्रीमान् पुत्रो वा* | 4-21-52 | | भोगार्थं रामा* | 5-29-34 |
| | तन्मम नाम | 5-05-56 | | रामा गीयते | 6-13-52 |
| | दानानां क्रमः | 5-20-08 | | अत्याहारस्तु | 6-28-10 |
| | क्षेत्रवानस्तु | 6-04-26 | | शारीरकोऽसौ* | 7-12-25 |
| | शम्भुर्जयति | 6-18-45 | | लोलचक्रस्थः | 7-26-33 |
| | रत्नाङ्गनार्था | 7-03-02 | | प्रागनिष्पदम् | 8-10-32 |
| | लक्ष्योऽसौ पार्थः* | 7-17-13 | | दिव्यवान् राजा | 8-24-18 |
| | सापत्न्यनिन्दा | 8-01-17 | | अंशार्थिनोर्थीः* | 9-07-50 |
| 101 | जनो मान्यो हि | 8-15-08 | 131 | सेनायां क्रोधः* | 9-21-07 |
| | स वादी राजा* | 8-28-47 | | दानं भानोर्नष्टम्* | 10-04-08 |
| | आकारो युद्धम् | 9-12-10 | | भूमिस्तस्य नित्यम्* | 10-16-54 |
| | दास्यामि श्राद्धम् | 9-25-18 | | चक्रार्धं प्राज्ञाय* | 10-29-26 |
| | कार्यहानिर्नार्या | 10-08-11 | | ता भार्याः पापोऽयम् | 11-11-46 |
| | दम्भाम्बरा नष्टाः* | 10-20-48 | | दिशोऽम्बराण्यस्य | 11-23-58 |
| | विकुलानां कार्यः* | 11-03-14 | | ग्लौर्नास्ति | (0)-6-09 |
| | हरणं पाद्यस्य | 11-15-28 | | मीनजेयम् | (0)-18-05 |
| | तुला संप्रत्यया | 11-27-36 | | दानानि नित्यम् | 1-00-08 |
| | धिगन्धः | (0)-9-39 | | तपः श्रेयः स्यात् | 1-12-16 |
| 111 | कविः पुत्रः | (0)-21-41 | 141 | अम्बुभिरिष्टैः* | 1-24-30 |
| | तत्त्वाङ्गनेयम् | 1-03-46 | | क्षमास्तु नरैः* | 2-06-56 |
| | जीर्णो मे कायः | 1-15-58 | | लोलधीः पुत्रः* | 2-19-33 |
| | दया हरस्य | 1-28-18 | | ते रौद्रा नागाः* | 3-02-26 |
| | अशनपरः | 2-10-50 | | विलोमकुलम् | 3-15-34 |
| | ताळुलेखोऽत्र | 2-23-36 | | स मन्दो रागी | 3-28-57 |
| | संगतो नागः* | 3-06-37 | | तैलप्रियस्त्वम्* | 4-12-36 |
| | विशुद्धो योगी | 3-19-54 | | साम्प्रतं रविः* | 4-26-17 |

| | | | | | |
|---|---|---|---|---|---|
| | कुलानां कर्म* | 5-10-31 | | तत्र दीयते* | 6-18-26 |
| | श्रुत्वा स्वराणि | 5-24-42 | | शोभा राज्ञः सेना | 07-02-45 |
| 151 | धर्मो दानं तु | 6-08-59 | 181 | आज्ञा साध्या सा* | 7-17-00 |
| | दूष्यं गोत्रं ते | 6-23-18 | | नटस्यानन्दः* | 8-01-10 |
| | तुलार्थिनोऽर्थी | 7-07-36 | | धनेशोऽयं जनः* | 08-15-09 |
| | जित्वास्य रथः* | 7-21-48 | | स मन्दो ह्रदः* | 8-28-57 |
| | श्रमणो निन्दा | 8-05-52 | | नागरो युद्धः | 9-12-30 |
| | षड्विधान्याहुः | 8-19-46 | | धीवशः क्रोधः* | 9-25-49 |
| | तत्र गोर्निधिः | 9-03-26 | | श्रमो दीनो नित्यम्* | 10-08-52 |
| | केशास्ते काळाः* | 9-16-51 | | धूली स्याद्राज्ञोऽयम्* | 10-21-39 |
| | **यानानि नो नयेत् | 10-00-01 | | बाह्यवने योग्यम् | 11-04-13 |
| | शिशिरे पानीयम् | 10-12-55 | | विगतपापोऽयम् | 11-16-34 |
| 161 | भोगमात्रं नित्यम् | 10-25-34 | 191 | तावदत्र कार्यः* | 11-28-46 |
| | यूनां दानं पथ्यम्* | 11-08-01 | | ग्रामो नष्टः | (0)-10-52 |
| | सत्येन श्रेयः स्यात् | 11-20-17 | | शशी रात्रौ | (0)-22-55 |
| | मुखे श्रीः | (0)-2-25 | | दुःशुभा नष्टाः* | 1-04-58 |
| | धारावृष्टिः | (0)-14-29 | | भानुः सद्यः स्यात् | 1-17-04 |
| | पलितं राज्ञः | 0-26-31 | | दयार्धं श्रेयः* | 1-29-18 |
| | तैलजा नार्यः* | 1-08-36 | | प्रभायाः पुत्रः* | 2-11-42 |
| | ताभिर्नराः स्युः* | 1-20-46 | | हर्यश्वः श्रेष्ठः | 2-24-18 |
| | *मीनलग्नोऽत्र | 2-03-05 | | धनुः सेनाङ्गम् | 3-07-09 |
| | तालुमध्ये श्रीः* | 2-15-36 | | शाक्यज्ञो रागी | 3-20-15 |
| 171 | *नोग्रा दारा राज्ञः* | 02-28-20 | 201 | सलिलं नवम्* | 4-03-37 |
| | धन्यः स्यात् कालः | 3-11-09 | | वैद्यः स कविः | 4-17-14 |
| | वर्गत्वं खलैः | 3-24-34 | | मेनकानामा | 5-01-05 |
| | श्वानो दीनो वा | 4-08-04 | | सेना मध्यमा* | 5-15-07 |
| | धवाः कारवः | 4-21-49 | | संयुद्धक्रमः* | 5-29-17 |
| | क्षोभः शनैः शनैः | 05-05-46 | | स्वर्गलोकोऽस्ति | 6-13-34 |
| | गोशुद्धिकामः | 5-19-53 | | गुणार्थी रतिः* | 6-27-53 |
| | दीनो वो ज्ञातिः | 6-04-08 | | काव्यप्रियोऽसौ | 7-12-11 |

| | | | | | |
|---|---|---|---|---|---|
| | भद्रतरोऽर्थी | 7-26-24 | | गावः प्रिया वः | 4-12-43 |
| | धू राज्ञः पादे | 8-10-29 | | सुरतं त्रिभिः | 4-26-27 |
| 211 | गुरुर्वरदः* | 8-24-23 | 231 | त्रिराज्ञां कुशः | 5-10-22 |
| | मानदो निधिः* | 9-08-05 | | धाराभिः श्रमः | 5-24-29 |
| | रङ्गस्य श्रद्धा | 9-21-32 | | त्रिभिर्हानिस्ते | 6-08-42 |
| | स्वभावो ज्ञानस्य | 10-04-44 | | अनाज्ञाश्रिता* | 6-23-00 |
| | अवस्थेयं नार्याः | 10-17-40 | | धन्यः स नाथः | 7-07-19 |
| | पुत्रो ज्ञानाढ्योऽयम् | 11-00-21 | | तिलस्य रसः* | 7-21-36 |
| | धवश्रेयः पथ्यम् | 11-12-49 | | तव मानद | 8-05-46 |
| | तेन शरैः पटुः | 11-25-06 | | षड्विधं पदम् | 8-19-46 |
| | वैद्योऽसौ* | (0)-7-14 | | मङ्गलं नीळम्* | 9-03-35 |
| | हयो धन्यः | (0)-19-18 | | योग्यः संयुद्धे | 9-17-11 |
| 221 | अप्रियो नये | 1-01-20 | 241 | योगो ज्ञानिनः स्यात्* | 10-00-31 |
| | शास्त्रबाह्योऽयम् | 1-13-25 | | शैलालयो नम्यः* | 10-13-35 |
| | भोगमात्रस्य* | 1-25-34 | | मन्त्रितं प्राज्ञाय | 10-26-25 |
| | ग्रामार्थी नरः* | 2-07-52 | | अनिधानं कपेः* | 11-09-00 |
| | यात्रान्नं श्रेष्ठम् | 2-20-21 | | श्रोत्रियः प्रियस्य | 11-21-22 |
| | भिक्षाज्ञो नागः* | 3-03-04 | | मंगलम्* | (0)-3-35 |
| | प्रज्ञातो योगी* | 3-16-02 | | कवेः शक्यम्* | (0)-15-41 |
| | मुख्यो धीरो लीनः* | 03-29-15 | | भवेत् सुखम् | (0)-27-44 |

# वाक्यदशकसूची

THE first column notes the number of the *Vākya*, and the last column notes the number of the corresponding verses. Since there are five extra verses owing to two verses representing five *Vākyas*, the verse numbers where the repetition occurs are also noted, so that this will help as a concordance.

| | | | | | |
|---|---|---|---|---|---|
| 1 | गीर्नः श्रेयः | 1 | 131 | सेना | 135 |
| 11 | होम | 11 | 141 | अम्बु | 145 |
| 21 | श्रुत्वा | 21 | 151 | धर्मो | 155 |
| 31 | शशी | 34* | 161 | भोगो | 166† |
| 41 | कुश | 44 | 171 | नोग्रो | 176 |
| 51 | रत्न | 55** | 181 | आज्ञा | 186 |
| 61 | प्रमोद | 65 | 191 | तावत् | 196 |
| 71 | काम | 75 | 201 | सलि | 206 |
| 81 | जनोन्ध | 85 | 211 | गुरु | 216 |
| 91 | दयावान् | 95 | 221 | अग्नि | 226 |
| 101 | जनोमान् | 105 | 231 | त्रिराज्ञाम् | 236 |
| 111 | कवि | 115 | 241 | योगो | 246 |
| 121 | पाप | 125 | 248 | भवेत् सुखम् | 253 |

---

* 27, 29 and 31 are repeated, and so the difference of three between the two numbers.

** 46 is repeated and the difference becomes four.

† 163 is repeated and the difference becomes five.

## वाक्यानां राशिचक्रपूर्तिसूची

The first column shows the *Vākya* numbers for each of the nine rounds in the *Rāsis*, and the second column shows the total number of *Vākyas* in each round.

| | | |
|---|---|---|
| I. | 1-27 | 27 |
| II. | 28-54 | 27 |
| III. | 55-81 | 27 |
| IV. | 82-109 | 28 |
| V. | 110-136 | 27 |
| VI. | 137-163 | 27 |
| VII. | 164-191 | 28 |
| VIII. | 192-218 | 27 |
| IX. | 219-245 | 27 |
| | 246-248 | 3 |
| | Total | 248 |

# PUBLICATIONS OF THE ADYAR LIBRARY

## (The Theosophical Society, Adyar, Madras, 20, India)

| | | Rs. | A. |
|---|---|---|---|
| 1910—1. | A PRELIMINARY LIST OF THE SAṂSKṚT AND PRĀKṚT MSS. in the Adyar Library. (Saṃskṛt-Devanāgarī) Boards ... 1-8 Cloth ... | 2 | 0 |
| 1912—2. | A DESCRIPTIVE CATALOGUE OF THE SAṂSKṚT MSS. in the Adyar Library. *By* F. O. Schrader, Vol. I, Upaniṣads Cloth ... | 5 | 0 |
| 3. | THE MINOR UPANIṢADS (Saṃskṛt) critically edited for the Adyar Library. *By* F. O. Schrader, Vol. I.—Saṃnyāsa Cloth ... | 10 | 0 |
| 1916—4. | AHIRBUDHNYA-SAṂHITĀ OF THE PĀÑCARĀTRA ĀGAMA (Saṃskṛt), 2 Vols. Cloth ... | 10 | 0 |
| 5. | INTRODUCTION (English) TO THE PĀÑCARĀTRA AND THE AHIRBUDHNYA SAṂHITĀ. *By* F. O. Schrader. Cloth ... | 3 | 0 |
| 1920—6. | YOGA UPANIṢADS—20—with the Commentary of S'rī Upaniṣad Brahma Yogin. Edited *by* Paṇḍit A. Mahadeva Sastri ... | 5 | 0 |
| 1921—7. | SĀMĀNYA VEDĀNTA UPANIṢADS—24—with the Commentary of S'rī Upaniṣad Brahma Yogin. Edited *by* Paṇḍit A. Mahadeva Sastri ... | 5 | 0 |
| 1923—8. | VAIṢṆAVA UPANIṢADS—14—with the Commentary of S'rī Upaniṣad Brahma Yogin. Edited *by* Paṇḍit A. Mahadeva Sastri ... | 4 | 0 |
| 1925—9. | S'AIVA UPANIṢADS—15—with the Commentary of S'rī Upaniṣad Brahma Yogin. Edited *by* Paṇḍit A. Mahadeva Sastri ... | 3 | 0 |
| 10. | S'ĀKTA UPANIṢADS—8—with the Commentary of S'rī Upaniṣad Brahma Yogin. Edited *by* Paṇḍit A. Mahadeva Sastri ... | 2 | 8 |
| 1926—11. | CATALOGUE OF SAṂSKṚT MSS. in the Adyar Library (Revised). 2 Vols. Each ... | 3 | 12 |
| 1929—12. | SAṂNYĀSA UPANIṢADS—17—with the Commentary of S'rī Upaniṣad Brahma Yogin. Edited *by* T. R. Chintamani, and the Paṇḍits of the Adyar Library ... | 4 | 0 |

| | | Rs. A. |
|---|---|---|
| 13. | RUKMIṆĪKALYĀṆA MAHĀKĀVYA by Rājacūḍāmaṇi Dīkṣita. Edited *by* the Paṇḍits of the Adyar Library and T. R. Chintamani ... | 2 0 |
| 1933—14. | UNPUBLISHED MINOR UPANIṢADS with the Commentary of S'rī Upaniṣad Brahma Yogin. Edited *by* the Paṇḍits of the Adyar Library ... | 5 0 |
| 1936—15. | TEN MAJOR UPANIṢADS with the Commentary of S'rī Upaniṣad Brahma Yogin. Edited *by* the Paṇḍits of the Adyar Library | |
| | Is'a to Aitareya, Vol. I ... | 4 8 |
| | Chāndogya and Bṛhadāraṇyaka, Vol. II ... | 6 0 |
| | Vols. 1 and 2, Boards ... | 9 8 |
| 1937—16. | MELARĀGAMĀLIKĀ of Mahāvaidyanātha S'ivan. Edited *by* Paṇḍit S. Subrahmanya Sastri ... | 2 0 |
| 1938—17. | SAṀGRAHACŪḌĀMAṆI—Edited *by* Paṇḍit S. Subrahmanya Sastri ... | 5 0 |
| 18. | PRATYABHIJÑĀHṚDAYAM (The Secret of Recognition) with English Translation and Notes *by* K. F. Leidecker ... | 3 0 |
| 19. | BHAVASAṄKRĀNTI-SŪTRA AND NĀGĀRJUNA'S BHAVASAṀKRĀNTI S'ĀSTRA—with the Commentary of Maitreyinātha —with English Translation *by* Paṇḍit N. Aiyaswami Sastri ... | 2 4 |
| 20. | YOGA UPANIṢADS. Translated into English *by* T. R. Srinivasa Aiyangar, and Paṇḍit S. Subrahmanya Sastri ... | 5 0 |
| 21. | * WHERE THEOSOPHY AND SCIENCE MEET (in four Parts) by a body of experts—Edited *by* Professor D. D. Kanga : | |
| | Part 1. Nature—From Macrocosm to Microcosm ... | 2 8 |
| | Part 2. Man—From Atom to Man ... | 2 8 |
| | Part 3. God—From Humanity to Divinity ... | 2 8 |
| | Part 4. Some Practical Applications ... | 2 8 |
| 1939—22. | ṚGVEDAVYĀKHYĀ, MĀDHAVAKṚTĀ—Edited *by* Prof. C. Kunhan Raja. Vol. I ... | 6 0 |
| 1940—23. | THE NUMBER OF RASAS *by* V. Raghavan, Department of Saṁskṛt, University of Madras ... | 3 0 |
| 1941—24. | SĀMĀNYA VEDĀNTA UPANIṢADS—Translated into English *by* T. R. Srinivasa Aiyangar and Paṇḍit S. Subrahmanya Sastri ... | 5 0 |
| 25. | BHAGAVADGĪTĀRTHAPRAKĀS'IKĀ of Upaniṣad Brahmayogin (Saṁskṛt). Edited *by* the Paṇḍits of the Adyar Library ... | 4 0 |

* *Published under the auspices of the Adyar Library Association.*

| | | Rs. | A. |
|---|---|---|---|
| 26. | SĀMAVEDA-SAṀHITĀ—With the Commentaries of Mādhava and Bharatasvāmin. Edited *by* Prof. C. Kunhan Raja ... | 6 | 0 |
| 27. | RĀJA DHARMA (Dewan Bahadur K. Krishnaswami Rao Lectures, 1938, University of Madras) *by* Rao Bahadur K. V. Rangaswami Aiyangar ... | 3 | 8 |
| 28. | VARIVASYĀRAHASYA of Bhāsurānandanātha (2nd Edition) *by* Paṇḍit S. Subrahmanya Sastri (with English Translation) ... | 2 | 8 |
| 29. | VYAVAHĀRANIRṆAYA OF VARADARĀJA—Edited *by* Rao Bahadur K. V. Rangaswami Aiyangar and A. N. Krishna Aiyangar ... | 15 | 0 |
| 30. | SAṀGĪTARATNĀKARA—With the Commentaries of Catura Kallinātha and Siṁhabhūpāla. Edited *by* Paṇḍit S. Subrahmanya Sastri. Vol. I. (Adhyāya 1) ... | 9 | 0 |
| 1942—31. | CATALOGUE OF THE ADYAR LIBRARY, Western Section. part 1 ... | 5 | 0 |
| 32. | ĀLAMBANAPARĪKṢĀ AND VṚTTI *by* Diṅnāga with English translation, Tibetan text etc. *by* Paṇḍit N. Aiyaswami Sastri ... | 3 | 8 |
| 33. | SOME CONCEPTS OF ALAṄKĀRA S'ĀSTRA *by* V. Raghavan, University of Madras ... | 4 | 0 |
| 34. | VEDĀNTAPARIBHĀṢĀ—with English translation and Notes *by* Prof. S. S. Suryanarayana Sastri ... | 2 | 12 |
| 35. | A DESCRIPTIVE CATALOGUE of the Sanskrit Manuscripts in the Adyar Library *by* K. Madhava Krishna Sarma. Vol. I—Vedic ... | 15 | 0 |
| 36. | S'RĪ PĀÑCARĀTRA RAKṢĀ of S'rī Vedānta Des'ika—Edited *by* Vaidyaratna Paṇḍit M. Duraiswami Aiyangar and Vedānta S'iromaṇi T. Venugopalacharya ... | 4 | 8 |
| 37. | CATALOGUE OF THE ADYAR LIBRARY, Western Section, part 2 ... | 6 | 0 |
| 38. | CATURDAS'ALAKṢAṆĪ OF GADĀDHARA with three commentaries—Edited *by* Paṇḍit N. Santanam Aiyar. Vol. I ... | 4 | 8 |
| 1943—39. | PHILOSOPHY OF VIS'IṢṬĀDVAITA *by* Prof. P. N. Srinivasachari ... | 10 | 0 |
| 40. | VĀDĀVALĪ OF JAYATĪRTHA with English translation and Notes *by* P. Nagaraja Rao ... | 4 | 0 |
| 41. | SPINOZIAN WISDOM OR NATURAL RELIGION *by* James Arther ... | 2 | 12 |

| | | Rs. | A. |
|---|---|---|---|
| 42 | USĀṆIRUDDHA of Rāmapāṇivāda. Edited *by* Paṇḍit S. Subrahmanya Sastri and Prof. C. Kunhan Raja ... | 3 | 8 |
| 1944—43. | SAṀGĪTARATNĀKARA—With the Commentaries of Catura Kallinātha and Siṁhabhūpāla. Edited *by* Paṇḍit S. Subrahmanya Sastri. Vol. II. (Adhyāyas 2—4) ... | 9 | 0 |
| 44. | ĀS'VALĀYANAGṚHYASŪTRA—With the Commentaries of Devasvāmin and Nārāyaṇa. Edited *by* Svami Ravi Tirtha. Vol. I (Adhyāya 1) ... | 6 | 4 |
| 45. | ALPHABETICAL INDEX OF SANSKRIT MANUSCRIPTS in the Adyar Library ... | 10 | 0 |
| 46. | CATALOGUE OF THE ADYAR LIBRARY, Western Section, Part 3 ... | 7 | 0 |
| 47. | ĀTMAN IN PRE-UPANIṢADIC VEDIC LITERATURE *by* H. G. Narahari ... | 8 | 0 |
| 1945—48. | RĀGAVIBODHA OF SOMANĀTHA with his own commentary Viveka. Edited by Paṇḍit S. Subrahmanya Sastri ... | 6 | 0 |
| 49. | ACYUTARĀYĀBHYUDAYA OF RĀJANĀTHA ḌIṆḌIMA—Sargas 7 to 12. Edited *by* A. N. Krishna Aiyangar ... | 3 | 8 |
| 50. | ANCIENT WISDOM OF WALES *by* D. Jeffrey Williams ... | 1 | 4 |
| 51. | SAṀGĪTARATNĀKARA OF S'ĀRṄGADEVA—Vol. I. Chapter 1. English Translation *by* Prof. C. Kunhan Raja. Cloth Rs. 4-8. Boards ... | 4 | 0 |
| 52. | VAIṢṆAVA UPANISADS. Translated into English *by* T. R. Srinivasa Aiyangar and G. Srinivasa Murti ... | 10 | 0 |
| 1946—53. | NYĀYAKUSUMĀÑJALI of Udayanācārya—Translated into English *by* Svami Ravi Tirtha. (Vol. I– Books i and ii)... | 4 | 0 |
| 54. | PRĀKṚTAPRAKĀS'A OF VARARUCI with the Commentary of Rāmapāṇivāda. Edited *by* Prof. C. Kunhan Raja and Paṇḍit K. Ramachandra Sarma ... | 4 | 4 |
| 55. | SPHOṬAVĀDA OF NĀGES'A—Edited *by* Paṇḍit V. Krishnamacharya with his own Commentary ... | 3 | 12 |
| 1947—56. | THE CRADLE OF INDIAN HISTORY *by* C. R. Krishnamacharlu ... | 3 | 8 |
| 57. | UNMATTARĀGHAVA OF VIRŪPĀKṢA—Edited *by* Paṇḍit V. Krishnamacharya ... | 1 | 12 |
| 58. | ORIGIN AND SPREAD OF THE TAMILS (Sankara-Parvati Lectures, 1940, University of Madras) *by* V. R. Ramachandra Dikshitar ... | 3 | 8 |
| 59. | JĪVĀNANDANAM OF ĀNANDARĀYAMAKHIN. Edited *by* Vaidyaratna Paṇḍit M. Duraiswami Aiyangar with his own Commentary. ... | 20 | 0 |

| | Rs. | A. |
|---|---|---|
| 60. A DESCRIPTIVE CATALOGUE of Sanskrit MSS. in the Adyar Library, *by* Paṇḍit V. Krishnamacharya, Vol. VI—Grammar, Prosody and Lexicography ... | 25 | 0 |
| 61. ṚGVEDAVYĀKHYĀ of Mādhava, Vol. II, edited by Prof. C. Kunhan Raja. ... | 15 | 0 |
| 62. DESCRIPTIVE CATALOGUE OF PALI MSS. in the Adyar Library, *by* Dr. E. W. Adikaram ... | 6 | 0 |
| 63. HARICARITA OF PARAMES'VARA—Edited *by* Pandit V. Krishnamacharya with his own Commentary ... | 5 | 0 |

## PAMPHLETS

### 1939

| | | |
|---|---|---|
| A VARIANT VERSION OF THE EKĀGNIKĀṆḌA. (Reprinted from the Adyar Library Bulletin, October, 1939). Edited *by* K. Madhava Krishna Sarma ... | 0 | 3 |

### 1940

| | | |
|---|---|---|
| THE RĀJAMṚGĀṄKA OF BHOJA. (Reprinted from the Adyar Library Bulletin, October, 1940). Edited *by* K. Madhava Krishna Sarma. | 0 | 4 |

### 1942

| | | |
|---|---|---|
| THE SAṬPAÑCĀS'IKĀ, a Silpas'āstra manual. (Reprinted from the Adyar Library Bulletin, February 1942). Edited *by* K. Madhava Krishna Sarma ... | 0 | 5 |
| THE PRAMĀṆAMAÑJARĪ OF SARVADEVA. (Reprinted from the Adyar Library Bulletin, May, 1942). Edited *by* K. Madhava Krishna Sarma ... | 0 | 6 |
| A List of Manuscripts (Reprinted from the Adyar Library Bulletin, Oct., 1942) ... | 1 | 0 |
| THE PATH OF GREATNESS. (Reprinted from the Adyar Library Bulletin, December, 1942), *by* Dr G. S. Arundale ... | 0 | 6 |

### 1943

| | | |
|---|---|---|
| VIS'EṢĀMṚTA of Tryambaka Mis'ra. An orthographical lexicon. Edited *by* H. G. Narahari. (Reprinted from the Adyar Library Bulletin, May, 1943) ... | 0 | 12 |
| A SANSKRIT LETTER OF MOHAMAD DARA SHUKOH with English Translation and Notes *by* Prof. C. Kunhan Raja. (Reprinted from the Adyar Library Bulletin, Oct. 1940, May and October, 1943) ... | 0 | 12 |

### 1946

| | | |
|---|---|---|
| DHARMACAURYARASĀYANA—Edited by H. G. Narahari, (Reprinted from the Adyar Library Bulletin, October and December 1946) ... | 1 | 12 |

## IN THE PRESS

CATURDAS'ALAKSAṆĪ OF GADĀDHARA with three commentaries. Vol. II *by* Paṇḍit N. Santanam Aiyar.

ĀPASTAMBASMṚTI—Edited *by* A. N. Krishna Aiyangar.

SAṀGĪTARATNĀKARA—With the Commentaries of Catura Kallinātha and Siṁhabhūpāla. Edited *by* Paṇḍit S. Subrahmanya Sastri, Vol III.

HORĀS'ĀSTRA—with the commentary Apūrvārthapradars'ikā *by* A. N. Srinivasaraghava Aiyangar.

SĀLISTAMBHASŪTRA—Restored from Tibetan and Chinese Sources—*by* Paṇḍit N. Aiyaswami Sastri.

SAṀGĪTARATNĀKARA, English Translation—Vol. II, *by* Prof. C. Kunhan Raja.

SAṀKALPASŪRYODAYA OF S'RĪ VEṄKAṬANĀTHA with the Commentaries Prabhāvilāsa and Prabhāvalī. Edited *by* Paṇḍit V. Krishnamacharya.

A DESCRIPTIVE CATALOGUE of Sanskrit MSS. in the Adyar Library, *by* H. G. Narahari, Vol. V—Poetry, Drama and Poetics.

## READY FOR THE PRESS

ĀS'VALĀYANAGṚHYASŪTRA with the Commentaries of Devasvāmin and Nārāyaṇa. Vol. II. Edited *by* Svami Ravi Tirtha.

NYĀYAKUSUMĀÑJALI OF UDAYANA with the Commentary of Varadarāja, Edited *by* Prof. C. Kunhan Raja.

GAUTAMASMṚTI—Edited *by* A. N. Krishna Aiyangar.

CATURDAS'ALAKṢAṆĪ OF GADĀDHARA—with Commentaries—Edited *by* Paṇḍit N. Santanam Aiyar, Vol. III.

PAKṢATĀ OF GADĀDHARA—with four commentaries *by* Paṇḍit N. Santanam Aiyar.

SIDDHĀNTALAKṢAṆAM OF GADĀDHARA with commentaries. Edited *by* Paṇḍit N. Santanam Aiyar.

AVAYAVA OF GADĀDHARA—with commentaries *by* Paṇḍit N. Santanam Aiyar.

SĀMĀNYANIRUKTI OF GADĀDHARA with commentaries. Edited *by* Paṇḍit N. Santanam Aiyar.

VYUTPATTIVĀDA OF GADĀDHARA with commentaries. Edited *by* Paṇḍit N. Santanam Aiyar.

S'AIVA AND S'ĀKTA UPANIṢADS—Translated into English *by* T. R. Srinivasa Aiyangar and G. Srinivasa Murti.

TEN MAJOR UPANIṢADS—English Translation *by* T. R. Srinivasa Aiyangar and G. Srinivasa Murti.

---




*Agents for our publications:*

**THE THEOSOPHICAL PUBLISHING HOUSE**

**Adyar, Madras, S. India**